॥ श्री ॥



हरिदास संस्कृत ग्रन्थमाला

२१४



॥ श्रीः ॥

# व्युत्पत्तिवादतरणिः

( व्युत्पत्तिवाद-प्रश्नोत्तरी )

रचयिता

**तार्किकप्रवरः श्रीमदुग्रानन्द झा**

( प्रधानाध्यापक : श्यामामहाविद्यालय, वाराणसी )




**चौखम्बा अमरभारती प्रकाशन**

भारतीय सांस्कृतिक साहित्य के प्रकाशक व विक्रेता

पोस्ट बाक्स संख्या १३८

के० ३७/१३०, गोपाल मन्दिर लेन

वाराणसी–२२००१ ( भारत )

१९८३

प्रकाशक

**चौखम्बा अमरभारती प्रकाशन**

पोस्ट बाक्स १३८,

के० ३७/१३०, गोपाल मन्दिर लेन,

वाराणसी–२२१००१ ( भारत )





तृतीय संस्करण, सन् १९८३ ई०

वि० सं० २०४०

मूल्य : २–००

अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत पुस्तकालय**

कचौड़ी गली

वाराणसी -२२१००१

मुद्रक—प्रभा प्रेस, के० ३/५२, दारानगर, वाराणसी ।

# प्राक्कथनम्



को न प्रेक्षावानुत्प्रेक्षितुमीशीत तत्रभगवद्गदाधरभट्टाचार्यकमनीयानल्पकल्पनोद्वेलद्वीचिनिचयोन्मज्जदतिदुरूहार्थमकरनिकराकीर्णस्य, फूत्कुर्वद्भिरिव फक्किकाफणास्फारोभवद्भिः सन्दिग्घसन्दर्भसरीसृपसन्दोहैरतिभीषणस्य, विविधविषमव्याख्यावात्याव्याधूयमानस्य चतुष्षष्टिवादेष्वतिगभीरस्यव्युत्पत्तिवादस्य महार्णवरूपताम् । तस्य च विलसन्तीनामपि विविधव्याख्यानामपरिणतमतिभिरतिदुरवगाहतया स्वगुरुकर्णधारैः स्वस्वाध्यापनप्लवैरुद्वेलिता अपि धारणाविप्लवेन कतिपयपदान्यपि प्लोतुमपारयन्तोऽद्यतना अन्तेवासिजना आचार्यपरीक्षोपरितननिश्रेणिकान्तिमखण्डखण्डितोत्साहाः सन्ततमाक्रोशन्तः प्रश्नोत्तरमुद्रया दर्शितव्युत्पत्तिसरणिं काञ्चनतरणिं प्रणेतुं कस्यचन कारुणिकस्य लेखनीस्फुरणमपेक्षमाणा एवाद्य यावदासन् । परमद्यत्वे भगवता श्रीविश्वनाथेनान्दोलितहृदयः परमसहृदयः कुसुमाकर इव न्यायकुसुमसम्पदः, काश्मीरकेदार इव व्याकरणकुङ्कुमस्य, कान्त इव कल्पनाकल्लोलिनीनां मौलिमणिरिव मैथिलानां वाराणसेय-श्रीश्यामामहाविद्यालयोदासीनविद्यालयोः प्रधानाध्यापयिता झोपनामा श्रीमानुग्रानन्दशर्मा स्वजनन्याः स्मृतिसमीहया कलावतीतितदाख्ययाव्युत्पत्तिवादतरणिमिमामस्माकमाग्रहेण कौतुकेन च प्रश्नोत्तरक्रमेण प्राणैषीदिति प्रवृत्तिरियं कस्यचन व्युत्पत्तिप्रणयिनः प्रेयसी स्यात् ।

किन्त्वसौ कृतौ कृतिमिमां व्युत्पत्तिवादतरणिपदेनोद्घोषयंस्तदन्तरवगाहनमुखेनैव समीहितसिद्धिमायुष्मतामभिसन्धत्ते न जातु व्यसनेनैव पङ्क्तिततीनामेवाभ्यसनेन, किमधिकेन ।

अनयोत्तीर्य तरण्याऽगाधं व्युत्पत्तिवादपाथोधिम् ।
व्युत्पत्त्या निर्बाधं सर्वे भूयासुराचार्याः ।। इति ।

झोपाह्वः श्रीभूपनारायणशर्मा
काशिकराजकीय-संस्कृतमहाविद्यालयाध्यापकः
काशी, वि० सं० २००४

# समर्पणपत्रम्

यतिवृन्दवन्दितपदद्वन्द्वारविन्दस्य सर्वतन्त्रस्वतन्त्र-
महाण्डलेश्वरस्वामिश्रीगङ्गेश्वरानन्दजीमहाराजस्य
शयकुशेशययोः सादरं समर्पणम्—

( १ )

जयतितरामनुकार्यः कृतिभिरसौ वेददर्शनाचार्यः ।
सच्चिदमन्दानन्दः स्वामी गङ्गेश्वरानन्दः ॥

( २ )

पण्डितजगदाखण्डल ! भूत्वैवाखण्डमण्डलाधीशः ।
शास्ति भवानाध्यात्मिकडिण्डिमनादैरिमं लोकम् ॥

( ३ )

साम्राज्ये भवतश्चिरन्तनतरोदासीनविद्यालयो—
न्यायाद्याखिलदर्शनेषु भजते काश्यामतीवोन्नतिम् ।
तस्मिन्नेष तु शेषजीवनमपि स्वस्योपयुङ्क्तेऽधुना,
स्मारं स्मारमनुक्षणं गुणगणं भावत्कमध्यापयन् ॥

( ४ )

यद्यपि नाविष्कुरुते कौशलमीदृक्कृतिः कृतिनः ।
भृशमुपकुरुते छात्रान् किन्त्वतिमात्राकुलानभितः ॥

( ५ )

गङ्गेश्वर ! दृगङ्गेदानीं ते मत्कृतिं पूत्वा ।
दृष्टादृष्टार्थाभ्यां सपदि पिपूर्यादियं श्रद्धा ॥

( ६ )

तस्मादेतत्पद्यस्रजमतिभक्त्या प्रभो ! पुरस्कुर्वन् ।
निजकृतिं "मुग्धानन्दः" सानन्दं ते समर्पयते ॥

॥ श्रीः ॥

# व्युत्पत्तिवादतरणिः

मङ्गलाचरणम्

यो मन्दरो निखिलदर्शनमन्थनेन
साहित्यसुन्दरगिरा च सुबन्धुरेव ।
श्रीबालकृष्णमपरं प्रवरं गुरूणां
मूर्त्तञ्च धर्ममिव तं सततं प्रणौमि ॥ १ ॥

धीमानुमापतिरिति प्रथितो विदेहे-
ष्वार्यो रमेश्वरमहानृपपूर्णकामः ।
दुर्गापदार्चनरतो जनकोऽतियोग्य-
स्तं मातरञ्च सततं हृदि भावयामि ॥ २ ॥

उग्रानन्देन विदुषा मैथिलेन कलावती ।
व्युत्पत्तिवादतरणिस्तन्यते छात्रहेतवे ॥ ३ ॥

प्रश्नोत्तरी

प्र०—शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्य्यादया भासत इति, अत्रैकत्वस्यापरत्वस्य च कुत्रान्वयः, संसर्गमर्यादयेत्यस्य वा कोऽर्थः ।

उ०—ननु शाब्दबोधे चैकपदार्थ इत्यत्रैकत्वस्य पदे पदार्थतावच्छेदके वाऽन्वयः ? तत्र नाद्यः, तथा सति स्वार्थानुयोगिकत्वं स्वभिन्नं यत्पदन्तदर्थप्रतियोगिकत्वमेतदुभयसम्बन्धेन पदविशिष्टः संसर्ग आकांक्षाभास्य इति पर्य्यवसितार्थे नीलघटयोरभेदस्याकांक्षाभास्यत्वेऽपि पचतीत्यादौ-आख्यातार्थयोः कृतिवर्त-

मानकालयोर्वृत्तित्वसंसर्गस्यासङ्ग्रहात् । न द्वितीयः,-तथासति स्वानुयोगित्व स्वभिन्नपदार्थप्रतियोगित्वोभयसम्बन्धेन पदार्थविशिष्टः संसर्ग आकांक्षाभास इति पर्य्यवसितार्थस्य पचतीत्यादौ कृतिवर्त्तमानकालयोर्वृत्तित्वसंसर्गे सत्त्वेऽ नीलघटयोरैक्येन तयोरभेदस्यासङ्ग्रहप्रसङ्गात् । नापि तृतीयः—तथा सति स्वावच्छिन्नानुयोगिकत्वस्वभिन्नपदार्थतावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयस म्बधेन पदार्थतावच्छेदकविशिष्टः संसर्ग आकांक्षाभास्य इति पर्य्यवसितार्थस नीलत्वघटत्वयोर्भेदेन नीलघटयोरभेदसंग्रहेऽपि संयोगेनाभावो नास्तीत्यादौ अभावपदेनाभावत्वस्य स्वरूपत उपस्थितत्वात्तदीयस्वावच्छिन्नप्रतियोगित्व कत्वसंसर्गस्यासङ्ग्रहप्रसङ्गादिति चेन्मैवम्—उपस्थितीयविशेष्यताविशिष्ट संसर्गता आकांक्षाप्रयोज्या इत्यत्र शाब्दबोधे चैकपदार्थे इत्यस्य तात्पर्यम् वै० स्वप्रयोज्यविशेष्यतानिरूपितत्व-स्वप्रयोजकवृत्तिज्ञानीय-विषयत्वानिरूपि तवृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीय-विषयता - प्रयोज्यप्रकारतानिरूपित त्वोभयसम्बन्धेन, अत एव समवायस्यैकत्वेऽपि तन्नियोरेकत्वनिष्ठप्रकारतानिरू पितघटत्वनिष्ठप्रकारतानिरूपितयोः संसर्गतयोर्भेदेन आकांक्षाप्रयोज्यत्वाप्रयोज त्वे सूपपन्ने ।

वस्तुतस्तु संसर्गताविशिष्टसंसर्गतेत्यादिपर्यवसितार्थः । वै० स्वतादात्म्य स्वनिरूपितप्रकारताविशिष्ट विशेष्यताकत्वाभ्याम् अत्र वैशिष्टयम्—स्वप्रयो जकपदनिष्ठाकांक्षाज्ञानीयविषयतानिरूपितसांसर्गिकविषयतानिरूपितपदनिष्ठ षयताप्रयोज्यत्व-स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपित-विषयत्वान्यतरसम्ब न्धेनेति दिक् ।

संसर्गमर्यादाशब्द अकांक्षायां रूढः, तृतीयार्थः प्रयोज्यत्वम्, तस्य भासध त्वर्थविषयतायामन्वयः । संसर्गभानं मर्यादया यस्या इति व्युत्पत्त्या संसर्ग मर्यादाशब्द आकांक्षायां योगरूढ इत्यपि केचित् ।

**प्र०—शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्ग मर्यादया भासत इत्येतद्वाक्यजन्यशाब्दबोधप्रकारः सम्यङ् निरूप्यताम् ।**

उ०—शाब्दबोधे चेत्यस्य—एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकःशाब्द बोधीयविषयताश्रयः संसर्ग आकांक्षाप्रयोज्यविषयताश्रय इति शाब्दबोध संसर्गे शाब्दबोधीयविषयताश्रयत्व-विशेषणान्नानुमित्यादिसंसर्गे व्यभिचारः ।

उ०— ... निरूपितत्वनिरूपितत्वप्रकारकादिरेति गदा

**परः, अत्र विभक्तिविभाजकत्वस्य कः परिष्कारः समानानुपूर्वीकत्वञ्च किम् ? अत्र सुन्दराभ्यां घटाभ्यामित्यादौ-एकविभक्तौ चतुर्थीत्वग्रहे परत्र च तृतीयात्वग्रहे विभक्त्योः समानानुपूर्वीकत्वग्रहसम्भवेन-अभेदान्वयबोधापत्तिः कुतो नोक्ता?**

उ०—सुब्विभाजकत्वञ्च सुप्त्वविशिष्टत्वम् वै० च स्वविशिष्टत्व-स्वविशिष्टाव्याप्यत्व-स्वव्याप्याघटितत्वः, आद्ये वै० स्वव्याप्यत्वस्वभिन्नत्वाभ्याम्, द्वितीये वै० स्वव्याप्यत्वस्वविशिष्टविशिष्टभिन्नत्वाभ्याम्, अत्राद्ये वै० स्वव्याप्यत्व-स्वव्याप्याघटितत्वाभ्याम्, द्वि० वै० स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्याभ्याम्। प्रथमसम्बन्धघटकस्य प्रथमसम्बन्धस्यानुपादाने घटत्वेऽतिव्याप्तिः, द्वितीयस्यानुपादाने सुप्त्वेऽतिव्याप्तिः, द्वितीयसम्बन्धानिवेशे सुत्वादावतिव्याप्तिः, द्वितीयसम्बन्धघटकस्य द्वितीयसम्बन्धस्यानुपादाने सुप्त्वव्याप्य यदाप्त्वं तद्व्याप्यत्वेनतृतीयात्वादावव्याप्तिः, द्वितीयसम्बन्धघटकं यद्द्वितीयवैशिष्टयं तत्र प्रथमवैशिष्टयघटकद्वितीयसम्बन्धानुपादाने सुप्त्वव्याप्यं यत् सु औ एतदन्यतरत्वादिकं तद्विशिष्टत्वेन प्रथमात्वादावव्याप्तिः। स्वव्याप्य घटितत्वनिवेशे तु सुप्त्वव्याप्येन सुत्वेन घटितत्वान्न तादृशान्यतरत्वमादायाव्याप्तिः। वै० घटकतृतीयसम्बन्धानिवेशे-सु-अम्-एतदन्यतरत्वेऽतिव्याप्तिः सुप्त्वव्याप्यत्वसुप्त्वव्याप्याव्याप्यत्वयोः सत्त्वात्, तन्निवेशे तु सुप्त्वव्याप्यसुत्वघटितत्वान्न दोषः। वस्तुतः प्रथमात्व-द्वितीयात्व-तृतीयात्व-चतुर्थीत्वपञ्चमीत्व-षष्ठीत्व-सप्तमीत्वैतावदन्यतमत्वं सुब्विभाजकत्वमिति न कुत्रापि दोषलेशोऽपीति शम्।

"समानानुपूर्वीकत्वञ्च स्वविशिष्टत्वम् वै० च० स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नाघटितत्वस्ववृत्तित्वोभयसम्बन्धेन, वृत्तिता च स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नाघटितत्वसम्बन्धावच्छिन्ना, घटशब्दे नीलघटसमुदायसमानानुपूर्वीकत्ववारणाय सम्बन्धः, नीलघटशब्दे घटशब्दसमानानुपूर्वीकत्ववारणाय प्रथमः"।

तृतीयान्तसुन्दराभ्यां समभिव्याहृतचतुर्थ्यन्तघटाभ्यामित्यतोऽपि शाब्दबोधापत्तिः समानानुपूर्वीकत्वसत्त्वादित्यपि दोष इष्यत एव मूलस्यापि लक्षणत्वात्। सिद्धान्ते तु प्रथमात्वादिना साजात्यविरहान्न दोषः इति।

**प्र०—विभक्तिविभाजकधर्मेणैव साजात्ये वक्तव्ये विभक्तिविभाजकप्रथमात्वादिना विशेषधर्मेण साजात्यवर्णनं किमर्थम् ?**

उ०—"प्रथमात्वादिपदोपादानादेव सुप्त्वेन विभाज्यतालाभः, नच सुब्विभाजकधर्मेणेत्येव कुतो नोक्तमिति शङ्क्यम्, कोऽसौ सुब्विभाजको धर्म इत्याकांक्षानिवृत्तये प्रथमात्वादिनेत्यस्य वक्तव्यत्वे विशेषाभावात् ।"

**प्र०—यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्रैव विशेषणवाचकपदयोः समानवचनकत्वनियम इत्यत्र विभक्त्यर्थसंख्येत्युक्त्यैव सामञ्जस्ये विभक्तितात्पर्यविषयत्वपर्यन्तानुधावनस्य किं प्रयोजनम् । किन्तावदत्र विरुद्धत्वम्, विशेषणवाचकपदोत्तरेति लघूक्तिः कथं परित्यक्ता, उर्वश्यप्सरसो गच्छन्तीत्यत्र तादृशविरुद्धसंख्याया अविवक्षितत्वेऽपि कथन्न समानवचनत्वम्; यत्र विशेष्यवाचकपदोत्तरविभक्तिः संख्यातात्पर्येण नोच्चारिता तादृशस्थले तादृशसंख्यायाः प्रसिद्धिः कथम् । समानवचनत्वञ्च परिष्करणीयम् ।**

उ०—विभक्त्यर्थत्वेन सङ्ख्यायाः प्रवेशे वेदाः प्रमाणमित्यादौ यत्र जसि सुत्वभ्रमादेकत्वशक्तत्वभ्रमाद्वा एकत्वशाब्दबोधः तत्रैकत्वस्य विभक्त्यर्थतया समानवचनत्वापत्तिः । विभक्तिशक्यत्वरूपविभक्त्यर्थत्वप्रवेशे च लाघवविरहः ।

"विरुद्धत्वं तादृशसंख्याऽसमानाधिकरणत्वम्, तात्पर्यविषयतावच्छेदकसंख्यात्वव्याप्य-धर्मावच्छिन्नभिन्नभिन्नत्वं वा" विरुद्धान्तमनिवेश्य विशेषणवाचकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वं यत्र तत्रेत्यादिनिवेशे वेदत्वे एकत्वविवक्षया प्रयुक्ते वेदाः प्रमाणमिति वाक्ये समानवचनत्वानुपपत्तिः । ननु यत्र विशेष्यवाचकेत्यादिग्रन्थेन तादृशाविवक्षितत्वे समानवचनत्वव्याप्यत्वमेव लभ्यते न तु व्यापकत्वमतो न दोष इति चेन्मैवम्, समानवचनत्वव्यापकतानियमस्य पृथगभिधाने ग्रन्थगौरवं स्यादतस्तादृशाविवक्षितत्वे एव समानवचनत्वव्याप्यत्वम्, व्यापकत्वं च मन्तव्यम् । एवञ्च व्याप्यत्वपक्षे विरुद्धान्तस्योपरञ्जकत्वेऽपि व्यापकत्वपक्षे उक्तस्थले व्यावृत्तिरस्त्येवेति दिक् ।

दाराप्सर इत्यादिपदोत्तरविभक्त्या संख्याया अविवक्षितत्वेन विशेष्यवाचकपदोत्तरविभक्तितात्पर्यसंख्येत्यस्य विवक्षितत्वपर्यन्तस्याप्रसिद्ध्या समानवचनत्वनियमानापत्त्या सुन्दरा दारा इत्यस्यासाधुत्ववारणाय स्वाव्यवहितोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याविषयकबोधजनकत्वेन तात्पर्यविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताक-स्वाभाववत्त्वसम्बन्धेन स्वविशिष्टं विशेषणवाचकपदं स्वसमानवचनमिति नियमस्वीकारे उर्वश्यप्सरस इत्यत्रापि समानवचनत्वापत्तिरतः स्वोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्संख्या-विवक्षाविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वसम्बन्धेन स्वविशिष्टं विशेषणवाचकपदं स्वसमानवचनमित्येव नियमः ।

"समानवचनत्वञ्च समानानुपूर्वीकत्वमेव, घटो द्रव्यमित्यादौ च स्थानिभूतस्यानुपूर्वीमादाय समानवचनत्वमुपपादनीयम्"

**प्र०—यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्रैव समानवचनकत्वमिति नियमोऽनुगतरूपेण परिष्करणीयः ।**

उ०—स्वविशिष्टं पदं स्वसमानवचनम्, वैं० स्वप्रयोज्यविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्व, स्वाव्यवहितोत्तरविभक्तिवृत्तिप्रत्ययवद्विभक्तिप्रकृतित्व, स्वोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्-संख्याविवक्षाविषयविभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व, स्वोत्तरविभक्तिवाच्यसंख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिधर्मावच्छिन्नबोधकत्वंतात्पर्यविषयत्वस्वोत्तरसमानानुपूर्वीकविभक्तिप्रकृतित्वप्रकारकसम्भावनाप्रयोज्यसाधुत्वप्रकारकसम्भावनाविषयस्वाभाववत्त्वोभयसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वैतच्चतुष्टयसम्बन्धेन, राजपदोत्तरविभक्त्या संख्याया अविवक्षां कृत्वा प्रयुक्त- राज्ञः पुरुषा इत्यादिवाक्ये समानवचनत्ववारणाय प्रथमः, स्तोकं पचावित्यादौ समानवचनत्वाय द्वितीयस्तथा चानुसन्धीयमानक्विपो व्यवधानान्न दोषः । मैथिली दारा इत्यादौ विशेष्यवाचकदारपदविशिष्टत्ववारणाय तृतीयः, दारपदस्य विशेषणवाचकत्वविवक्षायां मैथिली दारा इत्यादौ समानवचनत्ववारणाय तुरीयः संसर्गस्तथा च विशेष्यवाचकमैथिलीपदोत्तरविभक्तिःसुस्तद्वाच्यैकत्वसंख्यावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगिदारत्वावच्छिन्न-

बोधकत्वेन तात्पर्यविषयत्वस्य स्वोत्तरसुविभक्तिसमानानुपूर्वीकसुविभक्ति प्रकृतित्वप्रकारकसम्भावनाप्रयोज्या यद्यत्रं दारशब्दः सुविभक्तिप्रकृतिः स्यात्तदा साधुः स्यादिति सम्भावना तद्विषयत्वाभावस्य च दारपदे सत्त्वान्नोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वमिति न दोषः। पुष्पवन्तौ देव इत्यादौ समानवचनत्ववारणाय चतुर्थसम्बन्धप्रतियोगितावच्छेदकीभूत-प्रथमसम्बन्धस्थाने तादृशपर्याप्तिप्रतियोगिधर्मविशिष्टत्वन्निवेश्यम्, वै० स्वावच्छिन्नबोधकत्वेन तात्पर्यविषयत्वस्वपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावच्छक्यतानिरूपितशक्तत्तावत्त्वोभयसम्बन्धेन, पुष्पवन्तपदशक्यतायां चन्द्रत्वसूर्यत्वोभयपर्य्याप्तत्वान्न दोष इति दिक्।

**प्र०—सम्पन्नो व्रीहिरित्यत्रैकवचनोपस्थितानां नानैकत्वानां प्रत्येकं नानाव्रीहिष्वन्वयाङ्गीकारे दोषं प्रदर्श्य एकवचनार्थत्वं परिष्क्रियताम्।**

उ० – एकत्वमात्रं यद्येकवचनार्थः स्यादपि सम्पन्नो व्रीहिरित्यादौ एकवचनोपस्थितानां नानैकत्वानां प्रत्येकं नानाव्रीहिष्वन्वयः, न त्वेवम्, तस्य केवलान्वयित्वेनार्थत एव लाभादव्यावर्त्तकत्वाच्च, किन्तु सजातीयद्वितीयरहितत्वं सः, तदपि स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण, एवञ्च नानैकत्वानां तत्तद्व्रीहितनिष्ठभेदप्रतियोगितावच्छेदकत्वेन निरुक्तैकवचनार्थत्वसम्भवः, अतएव 'पशुना यजेत' इत्यादौ अनेकपशुकरणकयागान्नादृष्टसिद्धिः पशुनिष्ठैकत्वस्य विवक्षितत्वात्। साजात्ये विशिष्टान्तानुपादाने अत्र घटोऽस्तीत्यादौ देशान्तरीयघटे एतद्घटगतैकत्ववान्नेति भेदसत्त्वात् तादृशप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धिः।

वस्तुतः स्वविशिष्टमेकत्वमेकवचनार्थः, वै० स्वाभाववत्त्वसम्बन्धेन, प्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टावच्छेदकतावत्त्वरूपः, अत्र वै० स्वप्रयोज्यप्रकारतावच्छेदकतया विवक्षितसंसर्गावच्छिन्नत्वस्वविशिष्टनिष्ठभेदप्रतियोगितानिरूपितत्वाभ्याम्, अत्र वै०स्वप्रकृत्यर्थतावच्छेदकधर्मवत्त्व-स्वविशिष्टसमुदायत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वाभ्याम्, समुदायत्वे वै० स्वप्रकृत्यर्थनिष्ठाधिकरणतानिरूपिताधेयतावच्छेदकत्व-स्वसमभिव्याहृतपदार्थसंसर्गवृत्तित्व-स्वसमभिव्याहृतपदार्थसंसर्गेतरावृत्तित्व-स्वसमभिव्याहृतपदार्थसंसर्गवृत्त्यभावाप्रतियोगित्वैश्चतुष्टयसम्बन्धेन, स्वमेकवचनम्—यत्र देशे ब्राह्मणस्य शूद्रस्य प्रत्येकमेको घटस्तत्र 'अत्र ब्राह्मणस्य घटोऽस्ती'ति प्रयोगानुपपत्तिः शूद्रप्रकृत्यर्थतावच्छेदकघटत्वस्य स्वसमभिव्याहृतपदार्थतद्देशविद्यमानत्वसंसर्गस्य

त्वात् । अतः स्वविशिष्टसमुदायत्वेत्यादि, तथा च शूद्रघटनिष्ठो यो ब्राह्मण-घटैकत्ववान्नेति भेदस्तदीयप्रतियोगितानिरूपितावच्छेदकतायाः स्वविशिष्ट-निष्ठभेदप्रतियोगितानिरूपितत्वविरहात् स्वविशिष्टावच्छेदकतावत्त्वसम्बन्धा-च्छिन्नप्रतियोगिताकस्वाभाववत्त्व ब्राह्मणघटगतैकत्वे गतमिति तादृशप्रयोगो-पपत्तिः, यतः शूद्रघटे स्वप्रकृत्यर्थतावच्छेदकघटत्वस्य सत्त्वेऽपि स्वविशिष्टो यो ब्राह्मणप्रतियोगिकस्वस्वामिभावसम्बन्धघटितसम्बन्धसमुदायस्तद्वति समुदायत्वावच्छिन्नाधिकरणताविरहात् । सम्पन्नो व्रीहिरित्यादौ व्रीहित्व-गतैकत्ववान्नेति भेदमादायाप्रसिद्धिवारणाय स्वप्रयोज्यप्रकारतावच्छेदकेत्यादि तथा च स्वाश्रयाश्रयत्वसम्बन्धेनैकत्वनिष्ठावच्छेदकताकप्रतियोगिताभेद-विरहान्न दोष इति केचित् ।

नच पशुना यजेतेत्यत एकत्वविशिष्टपशुकरणकयागे इष्टसाधनत्वं प्रतीयते ततश्च तादृशयागान्तरसम्बन्धवति पश्वन्तरे एतद्यागपशुसजातीयत्वसत्त्वादेक-वचनार्थाप्रसिद्धिरिति वाच्यम्, एतत्पशुत्वेनैतद्यागसम्बन्धस्य तादृशयागान्त-रीयपशावभावात्, नरेण नरो येजेतेत्यत्रापि कर्त्तरि यागस्य कर्तृत्वसंसर्गः, करणे च करणत्वसंसर्गः, तथा च कर्तृकरणयोर्मिथः, साजात्यविरहान्न दोषः, किन्तु ब्राह्मणकर्तृकशयनाधिकरणस्थले 'ब्राह्मणः शेते' इति प्रयोगापत्तिस्तु न, पदार्थसंसर्गित्वमित्यत्र पदार्थपदस्य पदार्थतावच्छेदकपरत्वेन स्वावच्छिन्न-निरूपितकर्तृत्वस्य शयनत्वरूपपदार्थतावच्छेदकसम्बन्धस्य ब्राह्मणान्तरेऽपि सत्त्वेन एकत्वे भेदप्रतियोगितानवच्छेदकत्वाविरहात्, पशुना यजेतेत्यत्र स्वावच्छिन्ननिरूपितकरणत्वस्य यागत्वसम्बन्धस्य यागान्तरीयपशौ सत्त्वेऽपि यजधातोर्यागत्वोपलक्षिततद्व्यक्तित्वावच्छिन्ने लाक्षणिकत्वेन तद्व्यक्तित्व-सम्बन्धस्य यागान्तरीयपशावभात्, इति दिक् ।

**प्र०—पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेत्यस्य मूलभूतं कार्यकारणभावस्वरूपं निर्दुष्टं सपदकृत्यं समन्वय-पुरस्परं प्रतिपादनीयम् ।**

उ०—स्वप्रयोज्यविशेष्यत्वस्वेतरपदयोज्यप्रकारताविशिष्टत्वोभयसम्ब-न्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति स्वविशिष्टविशेष्यतासम्बन्धेन स्वजन्यो-पस्थितिः कारणम्, वैशिष्टयञ्च विशेष्यतायां स्वजन्यतावच्छेदकत्वस्वजन्य-तावच्छेदकप्रकारत्वासामानाधिकरण्योभयसम्बन्धेन, प्रकारतावैशिष्टयञ्च-

स्वनिरूपितत्वस्वाश्रयनिरूपिततत्वाभाववद्वृत्तित्वोभयसम्बन्धेन, सर्वत्र स्व
देन पदं ग्राह्यम्, तेन जातित्वविशिष्टघटत्वविशिष्टपरतच्छब्दघटितनि
स इति वाक्यान्न घटत्वे नित्याभेदान्वयबोधापत्तिः तत्पदजन्योपस्थितीयघ
त्वनिष्ठविशेष्यतायां तत्पदजन्यतावच्छेदकत्वसत्त्वेऽपि तदपदजन्यतावच्छे
कीभूतघटत्वनिष्ठप्रकारत्वासमानाधिकरण्यविरहात्, पशुपदजन्यबोधीयलं
मनिष्ठप्रकारतानिरूपितलाङ्गूलनिष्ठविशेष्यतायां पशुपदेतरपदप्रयोज्यप्रका
तानिरूपितत्वविरहात् कार्य्यतावच्छेदकानाक्रान्तत्वेन न शाब्दबोधानुपपत्ति
देवदत्तस्य गुरुरित्यादौ गुरुत्वत्वनिष्ठप्रकारतानिरूपितगुरुत्वनिष्ठविशेष्यता
गुरुपदजन्यतावच्छेदकीभूतप्रकारतासामानाधिकरण्यविरहात् शाब्दबोधानुप
त्तिस्तु न, स्वेतरदेवदत्तपदप्रयोज्यप्रकारताविशिष्टत्वविरहेण कार्य्यतावच्छे
कानाक्रान्तत्वात् स्वनिरूपितत्वसत्त्वेऽपि गुरुत्वनिष्ठविशेष्यातायां स्वाश्र
देवदत्तनिरूपितत्वाभाववद्वृत्तित्वविरहादिति दिक् ।

**प्र०—नीलस्य घट इत्यत्र बोध आपाद्य परिह्रियताम्**
**प्रदर्श्यताञ्च व्याससमासोभयसाधारणाकांक्षास्वीकारे दोषः**

उ०—ननु नीलस्य घट इत्यादावपि पदार्थोपस्थित्यादि शाब्दबोध
कारणकूटसत्त्वात् अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपित
घटत्वावच्छिन्नविशेष्यताकः शाब्दबोधः कुतो न, न च समविभक्तिकपदोप
स्थापितयोरेवाभेदान्वयबोध इति नियमभङ्गप्रसङ्गः, तस्य सामग्र्याः कार्य
जननेऽकिञ्चित्करत्वात्, इति चेन्मैवम्, तथाहि तादृशशाब्दबोधं प्रति स्वन्त
नीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकांक्षाज्ञानं कारणमित्येवं रीत्यैकं विंश
तिराकांक्षाज्ञानानि, कारणानि विनिगमनाविरहात् स्वन्तघटपदसमभिव्याहृत
स्वन्तनीलपदत्वज्ञानस्यापि कारणत्वे द्वाचत्वारिंशदाकांक्षाज्ञानानि कारणानि
समासस्थलीयतादृशबोधं प्रति च नीलपदाव्यवहितोत्तरघटपदत्वरूपाकांक्षाय
घटपदाव्यवहितपूर्ववर्त्तिनीलपदत्वरूपाकांक्षायाश्च ज्ञानं कारणम्, एवञ्च तादृ
शशाब्दबोधं प्रति चतुश्चत्वारिंशदाकांक्षाज्ञानानि, कारणानि तेषां चैकम
प्याकांक्षाज्ञानं नीलस्य घट इत्यादौ नास्तीति नापत्तिः, नचैतेषाञ्च सर्वेषा
माकांक्षाज्ञानानां सर्वत्रासत्त्वात् व्यभिचारभीत्या स्वन्तनीलपदसमभिव्याहृत
स्वन्तघटपदत्वरूपाकांक्षाज्ञानाव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननील
त्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति स्व
न्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाऽऽकांक्षाज्ञान कारणमित्यादिरीत्या
चतुश्चत्वारिंशदाकांक्षाज्ञानकार्यकारणभावकल्पनस्यावश्यकत्वे-सामान्यस्य अभे
दसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्य-

कताकशाब्दबोधस्य तत्तदाकांक्षाज्ञानकार्यतावच्छेदकानाक्रान्ततया योग्यताज्ञानादिबलादापत्तिः कुतो नेति वाच्यम्, व्यापकधर्मावच्छिन्नकार्ये जननीये व्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षितत्वेन तत्तदाकांक्षाज्ञानविशेषासत्वेनापादयितुमशक्यत्वात् ।

समासव्याससाधारणविशेषणपदनिष्ठविशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपविरुद्धविभक्तिराहित्यस्याकांक्षत्वे नीलो घट इत्यादौ नीलपदोत्तरसोः घटपदोत्तरसुभिन्नतया तादृशविरुद्धविभक्तिराहित्यासम्भवः, विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य तत्त्वे विभक्तित्वाद्यज्ञानदशायां शाब्दबोधानुपपत्तिः स्वरूपतः तस्य कारणत्वे नीलो घट इत्यादौ सुपदेऽम्पदत्वभ्रमदशायां शाब्दबोधापत्तिः नीलस्य घट इत्यादौ षष्ठ्यादेः सुपदत्वभ्रमदशायां शाब्दोधानुपपत्तिश्च ।

स्वोत्तरसुपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसम्बन्धेन नीलादिपदविशिष्टसुवन्तघटादिपदत्वस्य तत्त्वे समासस्थलीयाया आकांक्षाया अतिरिक्ताया अकल्पनेन लाघवसत्त्वेऽपि घटीयलाक्षणिकघटपदेन नीलपदस्य कर्मधारयं कृत्वा तेन सह रूपपदस्य कर्मधारये कृते नीलघटरूपमित्यादौ घटपदस्य सुवन्तत्वाभावेन अन्यादृश्या अप्याकांक्षायाः समासस्थल उपगन्तव्यतया लाघवाभावः ।

**प्र०—नीलं घटमानयेत्यादावभेदस्य विशेषणविभक्त्यर्थत्वे अभेदपदार्थनिर्वचनमुखेन प्रसक्तदोषानाशङ्क्य परिहृत्य च संसर्गतावादिमतमुपपादनीयम् ।**

उ०—अभेदस्य भेदत्वावच्छिन्नाभावरूपत्वेऽप्रसिद्धिः, भेदप्रतियोगिकाभावरूपत्वे नीलभेदजलोभयाभावमादाय नीलं जलमित्यादिवाक्यस्यप्रामाण्यापत्तिः, नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे नीलादिपदार्थानन्वयः । भेदप्रतियोगिकाभावस्य विभक्त्यर्थत्वं स्वीकृत्य नीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नाभावबोधस्तु न. पदार्थद्वयसंसर्गभानस्यैवाकांक्षानियम्यत्वात् । भेदस्य अभावस्य च विशेषेण विभक्त्यर्थत्वे नीलं घटः, इत्यादावप्यभेदान्वयबोधापत्तिः द्वितीयाजन्याभेदबोधं प्रति द्वितीयाद्यन्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वे प्रमेयत्वावच्छिन्नभेदस्य कम्बुग्रीवादिमत्त्वावच्छिन्नभेदस्य चाप्रसिद्ध्या प्रमेयो घटः कम्बुग्रीवादिमान् घट इत्यादावनुपपत्तिः ।

नीलपटपरनीलपदघटितस्य नीलो घट इत्यादिवाक्यस्य प्रामाण्यापत्तिश्च, अत एव विशेष्यतावच्छेदकीभूतनीलत्वादिकमपि न विशेषणविभक्त्यर्थः ।

संसर्गतामते च तत्तद्व्यक्तित्वावच्छिन्नभेदाभावस्यैव नीलत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनां स्वस्मिन् सम्बन्धतेति न दोषः। तस्य विशेषणविभक्त्यर्थत्वन्न सम्भवति अपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वे शक्तिग्रहासम्भवेन बोधानुपपत्तेरित्यपि न विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगितायाः प्रतियोगिनः सम्बन्धतया भानात्, अन्यथा विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेः, तस्माद् विशेषणविभक्त्यर्थोऽभेदस्तादात्म्यम्, तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वरूपं तादृशं धर्मस्तत्तद्व्यक्तित्वादिरूपः। अपूर्वव्यक्तिनिष्ठस्यापि तस्य सामान्यप्रत्यासत्त्या सुग्रहत्वम्, संसर्गतावादिनापि एतादृशानुगताभेदस्यैव संसर्गत्वभङ्गीकार्यम् न तु तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य तथा सति यत्किञ्चित्तादृशाभावत त्पर्य्येण नीलेऽपि न नील इत्यादिवाक्यस्य प्रामाण्यापत्तिरिति दिक्।

विशेषणविभक्तेरभेदार्थकत्वे नञो भेदबोधकत्वाभावः घटो न नील इत्यादौ नीलाद्यभेदाभावस्यैव प्रत्ययात्। अनीलं घटमानयेत्यादौ च सामानाधिकरण्यानुरोधेन नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात्। अतोऽभेदस्य संसर्गत्वमेवोचितम्, किञ्च तस्य सगर्गतोपगमेऽपि गौरवविरहेण विशेषणविभक्तेस्तत्र वृत्तिकल्पनं नोचितम्। शक्तिभ्रमस्वारसिकलक्षणाग्रहस्थलेऽपि संसर्गतावादिना अभेदस्य ससर्गत्वमेवोपेयते इति न संसर्गप्रकारोभयविधबोधं द्विविधयोग्यताज्ञानादीनां द्विविधबोधहेतुत्वेन कार्यकारणत्वाधिक्यम्।

**प्र०—द्वितीयादिना अभेदबोधने द्वितीयाद्यन्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वमुक्तं भट्टाचार्येण अत्र आदिना तृतीया परिगृह्यते चेत् धान्येन धनवान् प्रकृत्या चारुरित्यादावभेदान्वयबोधानुपपत्तिः, तस्या अपरिग्रहे सुन्दरेण घट इत्यादावभेदान्वयापत्तिः, इत्याशंकायाः किमुत्तरम्।**

उ०—अत्र आदिना प्रकृत्यादिभ्य उपसंख्यानमित्येतद्विहिततृतीयातिरिक्ततृतीया गृह्यते अतो नोक्तदोषः।

**प्र०—तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावत्वेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावस्य संसर्गत्वे को**

दोषः तद्वारणाय च केन रूपेण च संसर्गता तत् स्पष्टं वक्तव्यम् ।

प्र०—तत्तद्व्यक्तित्वावच्छिन्नाभावस्य विशिष्य-संसर्गत्वे दोषमुपपाद्य तादात्म्यस्वरूपमनुगतीकृत्य वक्तव्यम् ।

उ०—विभक्त्यर्थे भेदे नीलत्वादिना तत्तद्व्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेनान्वयः, तादृशभेदस्य च तत्तद्व्यक्तिभेदत्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन अभावे अन्वये तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इत्युच्यते, स च न समीचीनः । विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगि-तायाः प्रतियोगिनः संसर्गतया प्रतीतेः, अन्यथा विशिष्टवैशिष्ट्यावगाहि बुद्धित्वं नोपपद्येत, विशेष्ये विशेषणमिति रीत्या अभावज्ञानं च न कश्चिदङ्गीकरोति अभावबुद्धिस्तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेत इति दर्शनात् ।

"अभेदस्तादात्म्यम्, तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वाभ्यां भेदविशिष्टान्यत्वरूपम् अयमेव विशेषणविभक्तेरर्थः । ईदृशो धर्मस्तत्तद्व्यक्ति-त्वादिरेव ।

प्र०—नीलपटपरनीलपदघटितस्य नीलो घट इति वाक्यस्य प्रामाण्यमापाद्य निरस्य च अभेदस्वरूपं परिष्कृत्य तस्य प्रकार-तया संसर्गतया वा भानमुचितमिति निरूप्यताम् ।

उ०—भेदाभावस्य विशेषणविभक्त्यर्थत्वे नीलपटपरनीलपदघटितस्य नील घट इति वाक्यस्य प्रामाण्यं स्यात् घटस्यापि नीलत्वात् पटवृत्तिगुणात्मक-नीलत्वस्य घटेऽसत्त्वेन तादृशापत्तिवारणे तु पटपरद्रव्यपदघटितस्य द्रव्यं घट इति वाक्यस्य प्रामाण्यं स्यात् इत्यूहनीयम् ।

प्र०—घटो घट इत्यत्र शब्दबोधवारणाय किमुक्तं गदा-धरेण ?

उ०—घटो घट इत्यत्र घटत्वमात्रावच्छिन्नविशेष्यतानिरूपितघटत्वमात्रा-वच्छिन्नप्रकारताकशाब्दबोधस्याप्रसिद्धयैव नापत्तिः ? धर्मितावच्छेदकता-सम्बन्धेन घटत्वमात्रावच्छिन्नप्रकारताकशाब्दबोधस्य द्रव्यत्वे प्रसिद्धस्य घटत्वे

आपत्तिवारणाय तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधम्प्रति तद्धर्मभेदस्य कारणत्वमभ्युपगन्तव्यम्, तेन घटत्वे घटत्वभेदविरहान्नापत्तिः।

वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदस्य कारणत्वम्, एवञ्चाभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधव्याक्यस्य घटत्वान्यवृत्तिविषयतासम्बन्धेन बोधस्य घटत्वभेदघटितसामग्र्या अपेक्षितत्वेन घटत्वेन तद्विरहान्नापत्तिः।

**प्र०—अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः घटो घटः दण्डवान् दण्डवान् पाकं पचतीत्यादौ तथाविधान्वयबोधानुदयात्, इति भट्टगदाधरोक्ता दर्शितफला व्युत्पत्तिः कार्यकारणभावमूलिका प्रतिबध्यप्रतिबन्धकभावमूलिका वेति स्फुटमुपपाद्य तत्रोपात्तं वैरूप्यं कुत्रान्वेतीति गुणदोषनिरूपणपुरस्सरमुपवर्ण्य च अग्रे अथेत्यादिसन्दर्भस्य सङ्क्षेपेण आशयो वर्णनीयः।**

उ०—अभेदान्वयबोधश्चेत्यादिव्युत्पत्तिः तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्न प्रकारतानिनिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदः कारणमिति कार्यकारणभावमूलिका।

विरूपोपस्थितयोरित्यत्र विभिन्नरूपाभ्यामुपस्थितो याभ्यां पदाभ्यान्ते विरूपोपस्थिते पदे तयोर्विरूपोपस्थितयोरित्यर्थः, षष्ठ्यर्थश्च जन्यत्वन्तस्य चाभेदान्वयबोधेऽन्वयः, एवञ्च वैरूप्यस्य विरूपे तस्य च करणतया उपस्थितान्वयः, एतेन विरूपोपस्थितयोरित्यत्र द्विवचनार्थद्वित्वस्य विरूपोपस्थिते नीलघटादौ कथमन्वयो नीलघटादिपदार्थे द्वित्वाभावादित्यपास्तम्, प्रागुक्तविग्रहेण विरूपोपस्थितयोरित्यस्य पदपरत्वेन पदयोर्द्वित्वान्वयस्याबाधितत्वात्।

अथ धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे प्रसिद्धोऽभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकः शाब्दबोधो घटत्वे कुतो न, अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्तु नापादयितुं शक्योऽप्रसिद्धत्वात्। घटो नीलघट इत्यादौ विधेयांश अधिकावगाहिशाब्दबोधस्य प्रसिद्धत्वेऽपि तस्य विशेष्यतावच्छेदकविषया

नीलादिभाननियामकनीलाद्युपस्थिततात्पर्यज्ञानविशेषादिघटिताया एव सामग्र्याः प्रयोजकत्वात्, इति चेन्मैवम्, योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेन आत्मनिष्ठप्रत्यासत्याऽनन्तकार्यकारणभावकल्पनापेक्षया धर्मितावच्छेदकमनिवेश्य धर्मितावच्छेदकतासम्बन्धेन अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारकशाब्दबोधं प्रति धर्मितावच्छेदकतासम्बन्धेन अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतायोग्यताज्ञानस्य कारणत्वे लाघवेन तद्बलेन घटत्वे तादृशशाब्दबोधस्याऽऽपादनसम्भवेऽपि तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणत्वान्न दोष इति दिक् ।

**प्र०—घटो नीलघट इत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्र दर्शितरीत्या सोऽप्युपपादनीय इति गदाधरः । अत्रान्यत्र प्रदर्शितप्रकारः कीदृशः ? ।**

उ०—घटो नीलघट इत्यत्र शाब्दबोधोपपत्तये उक्तकार्यकारणभावे तद्धर्मावच्छिन्नप्रकारतास्थाने तद्धर्ममात्रावच्छिन्नत्वं निवेश्यम्, प्रकृते च नीलघट नष्टप्रकारतायां घटत्वमात्रावच्छिन्नत्वविरहेण न कार्यतावच्छेदकाक्रान्तत्वम् ।

वस्तुतः तद्रूपवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ तद्रूपभेदस्य वा कारणत्वं वक्तव्यम्, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, अवच्छेदकतायां निरवच्छिन्नत्वनिवेशस्याप्यत्रैव तात्पर्यम्, निरूपितत्वञ्च साक्षात्परम्परासाधारणमिति दिक् ।

**प्र०—वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुतालाघवादिति ग्रन्थः, अत्रेदृशकार्य्यकारणभावकल्पने किं मानम्, कल्पनेऽपि कथं घटो घट इत्यत्र शाब्दबोधापत्तिवारणम् ? ।**

उ०—तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणत्वे स घटः घटः स

इत्यादौ जातित्वादिविशिष्टवटत्वावच्छिन्नप्रकारतानिरूपित विशेष्यताकशाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरच्छेदकत्वे निरवच्छिन्नत्वम्, घटो नीलकट इत्यन्वयबोधोपपत्तये प्रकारतायां तद्धर्मनात्रावच्छिन्नत्वं स स इत्यादिवाक्यात् जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदताकाभेदान्वयबोधवारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकता-प्रत्यासत्त्या शाब्दबोधंप्रति तद्धर्मभेदस्यापि पृथक् कारणत्वम्, दण्डवान् दण्डवान् इत्यादिवाक्यात् दण्डसंयोगत्वावच्छिन्नवति तदवच्छिन्नवदभेदान्वयबोधवारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितसंयोगत्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावच्छेदकतासम्बन्धेन शाब्दबोधे दण्डत्वादिभेदस्य पृथक् कारणत्वम् अवच्छेदकतायां निरवच्छिन्नत्वनिवेशश्चेति महद्गौरवम्, अतः तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदः कारणमिति कार्यकारणभावं उक्तो गदाधरेण।

**प्र०—येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकतेत्यादिग्रन्थस्योपक्रमोपसंहारौ निरूपणीयौ।**

उ०—ननु द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितिविरहकालेऽपि द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेन तादृशशाब्दबोधवारणाय समानप्रकारताप्रत्यासत्त्यापदार्थोपस्थितेः शाब्दबोधहेतुत्वकल्पनं व्यर्थम्, प्रकारतासम्बन्धेन शाब्दबोधे प्रकारतासम्बन्धेनोपस्थितेः कारणत्वेऽपि धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे तस्या अहेतुत्वेनापत्तितादवस्थ्यात्, इत्यत आह—येन सम्बन्धेनेत्यादि। अयं भावः—व्याप्यकार्ये जननीये व्यापकसामग्र्या अपेक्षितत्वेन धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे व्याप्ये जननीये व्यापकसामग्र्याः प्रकारतासम्बन्धेनोपस्थितिघटिताया अवश्यापेक्षणीयतया न द्रव्यपदजन्योपस्थितिमन्तरा शाब्दबोधापत्तिरिति।

वस्तुतस्तु स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपित—विशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितिः। स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेन शाब्दबोध प्रति कारणं स्वीकार्यम्। अत एव प्रकारतासम्बन्धेन नीलादिपदार्थे जायमानशाब्दबुद्धिम्प्रति प्रकारतासम्बन्धेनोपस्थित्यभावेऽपि न व्यभिचार इति दिक्।

**प्र०—[illegible]**

उ०—यथा धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकानुमितौ धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकपरामर्शत्वेन कारणतायां यत्र भावविज्ञानमत्रमेत्यप्रामाण्यज्ञानम्, अनन्तरं वह्निव्याप्यधूमवान् पर्वत इति परामर्शः। ततो वह्निव्याप्यालोकवद्द्रव्यमितिपरामर्शस्ततो वह्निमान् पर्वतः वह्निमद्द्रव्यमिति समूहालम्बनानुमितिस्तत्र तस्या धूमालोकोभयलिङ्गिकाया द्रव्यत्वपर्वतत्वयोरुभयत्र सत्त्वेन तल्लिङ्गकपरामर्शस्य तत्रासत्याद् व्यभिचारवारणाय तल्लिङ्गकपरामर्शधर्मितावच्छेदकताविशिष्टधर्मितावच्छेदकतायाः कार्यतावच्छेदकसम्बन्धत्वमुपेयते तथाऽत्रापि वृत्तिज्ञानधर्मितावच्छेदकताविशिष्टप्रकारताया एव कार्यतावच्छेदकसम्बन्धत्वं स्वीकार्यमित्यर्थः।

**प्र०—धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकताविरहेऽपि द्रव्यत्वादिनिष्ठायास्तस्यास्तत्कार्यतावच्छेदकधर्मघटकत्वादिति गदाधरपङ्क्तेः कोऽभिप्रायः ?**

उ०—अथाभेदसम्बन्धेन घटविशिष्टं द्रव्यमित्याकारकयोग्यताज्ञानं समवायसम्बन्धेनात्मनि वर्त्तते शाब्दबोधस्तु धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्व इति कार्यकारणयोः सामानाधिकरण्याभावेन कथं तादृशयोग्यताज्ञानादिघटितसामग्र्या धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे शाब्दबोधजननमित्यत आह—धर्मितावच्छेदकतायास्तत् कार्यतावच्छेदकसम्बन्धताविरहेऽपि इत्यादि।

तत्कार्यतेत्यत्र तत्पदेन समवायेन कारणीभूतं योग्यताज्ञानं ग्राह्यम्, तत् कार्यताशाब्दबुद्धौ तदवच्छेदकसम्बन्धत्वं समवायस्य तु धर्मितावच्छेदकताया इत्यर्थः।

द्रव्यत्वादिनिष्ठायास्तस्या इति—धर्मितावच्छेदकताया इत्यर्थः। तत्कार्यतावच्छेदकसम्बन्धघटकत्वादित्यत्रापि तत्पदेन समवायेन कारणीभूतं योग्यताज्ञानं परामृश्यते तस्य कार्यतावच्छेदकधर्मः—अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वम्, तद्घटकत्वञ्च द्रव्यत्वनिष्ठधर्मितावच्छेदकतायाः।

अयंभावः—समनियतधर्मावच्छिन्ने कार्ये जननीये समनियतधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षितत्वेन धर्मितावच्छेदकतासम्बधेन तादृशशाब्दबुद्धित्वस्य समवायेन तादृशशाब्दबोधत्वसमनियततया समवायेन योग्यताज्ञानादिघटितसामग्र्या अपेक्षितत्वेन तया सामग्र्यैव धर्मितावच्छेदकतासम्बन्धेन

द्रव्यत्वे तादृशशाब्दबोधजननम्, नतु तत्र सामग्र्यन्तरापेक्षा, अत एव शाब्दबोधादिनानाकार्याणां कालिकसम्बन्धेन काले जायमानानां न सामग्र्यन्तरापेक्षेति।

**प्र०—निपातातिरिक्तप्रातिपदिकार्थयोः क्रियातादृशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वादिति नियमघटकपदानां व्यावृत्तिं प्रदर्श्य याचकसम्बन्धीत्यत्र प्रातिपदिकार्थे सम्बन्धेन याचकपदार्थस्य निरूपितत्वसम्बन्धेनान्वयेऽपि कथन्न नियमव्याहतिरित्युपपाद्यताम् ?**

उ०—घटो न पट इत्यादौ नञर्थभेदे घटस्य प्रतियोगितासम्बन्धेन भेदस्य च स्वरूपसम्बन्धेन पटेऽन्वयबोधान्निपातातिरिक्तेति। घटपदस्य घटप्रतियोगिके लक्षणाभ्युपगमे तु भूतले न घटः, इत्यादौ भूतले घट एतद्वाक्यजन्यबोधनिवर्त्यत्वानुरोधात् भूतलवृत्तित्वाभाववान् घट इति बोधस्यावश्यकत्वेन तत्र व्यभिचारवारणाय निपातातिरिक्तत्वेति। तत्रापि नञ्पदस्याभाववति लक्षणामभ्युपेत्य भूतलवृत्तित्वाभाववतोऽभेदान्वयबोधस्वीकारस्तु न युक्तः, भूतलवृत्तित्वाभावप्रकारकबुद्धित्वाद्यपेक्षया अभेदसम्बन्धेन भूतलवृत्तित्वाभाववत् प्रकारकबुद्धित्वस्य प्रतिबध्यतावच्छेदकत्वे गौरवात्।

नीलो घट इत्यादौ नामार्थयोः स्तोकं पचतीत्यादौ नामार्थ धात्वर्थयोरभेदेन साक्षादन्वयबोधात् व्यभिचारवारणाय—भेदेनेति। तण्डुलं पचतीत्यादौ नामार्थधात्वर्थयोः—परम्परयाभेदान्वयबोधाद् व्यभिचारवारणाय साक्षादिति, याचकसम्बन्धीत्यादौ याचकपदस्य याचकनिरूपिते लक्षणा तस्य च सम्बन्धपदार्थेऽभेदेनैवान्वय इति न नियमव्याहतिः।

**प्र०—अथ राजा पुरुष इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्न भेदान्वयबोधः? सामग्र्याः कार्य्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिञ्चित्करत्वादित्युपक्रम्य अत्र केचिदित्यादिना यत् प्रतिपादितं तत् समालोचनीयम्।**



उ०—विशेष्यतासम्बन्धेन नामार्थप्रकारकभेदान्वयबोधम्प्रति विशेष्यतासम्बन्धेन

प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पने राजा पुरुष इत्यादौ भेदान्वयबोधवारणेऽपि राज्ञः पुरुष इत्यादौ स्वत्वस्यापि नामार्थतया तत्प्रकारकबोधे पुरुषस्य विशेष्यत्वानुपपत्तिः। तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्वे च राजसम्बन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्यद्वयजन्यसमूहालम्बनशाब्दबोधे पुरुषस्य राजसम्बन्धविशेष्यतया भानानुपपत्तिः। प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतत्तदर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रत्येव तथात्वे यत्र राजा पुरुषः, इत्यादौ पुरुषपदाधीनपुरुषोपस्थितौ सुप्रत्ययवशादेकत्वमपि गोचरीभूतम्, तत्र सुप्रत्ययजन्यसमूहालम्बनोपस्थितेः विशेष्यतासम्बन्धेन पुरुषेऽपि सत्त्वात् राजा पुरुष इत्यादौ भेदान्वयबोधापत्तिस्तदवस्था, प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेर्हेतुत्वेन समानाकारकज्ञानीयविशेष्यताया ऐक्यात् प्रत्ययजन्यलक्षणाधीनपुरुषोपस्थितिविशेष्यतायाः शक्तिज्ञानाधीनपुरुषोपस्थितिविशेष्यतायाश्चाभिन्नतयोक्तातिप्रसङ्गतादवस्थ्यात् स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेर्हेतुत्वमपि न सम्यक् प्रत्ययत्वस्यानुगताननतिप्रसक्तस्य दुर्वचत्वात्। राजसम्बन्धः पुरुष इत्यादौ सम्बन्धपदेङस्पदत्वभ्रमदशायां सम्बन्ध-विशेष्यकराजप्रकारकान्वयबोधानुपपत्तेः, राज्ञः पुरुष इत्यादौ ङस्पदे सम्बन्धपदत्वभ्रमदशायां सम्बन्धविशेष्यकराजप्रकारकान्वयबोधापत्तेश्च, प्रत्ययत्वप्रकारकज्ञानविषयपदजन्योपस्थितेः कारणत्वे प्रत्ययत्वानुपस्थितिदशायां शाब्दबोधानुपपत्तिरिति।

**प्र०—स्वत्वस्य संसर्गविधया प्रकारविधया वा भानमिति विचारावसरे राजाभावव्याप्यराजस्वत्वाभाववान् पुरुष इत्यादिदृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशाधिक्येन लाघवानवकोशादित्यनेन स्वत्वप्रकारकबोध एवोचित इत्यभिप्रायो व्यञ्जितः, परन्तु राजस्वत्वाभावव्याप्यराजाभाववान् पुरुष इत्यादि निश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्यजन्यशाब्दबोधे विरोधितया तथाविधसामग्री-प्रतिबन्धकतायां निवेशाधिक्यात् स्वत्वसंसर्गतापक्ष एवोचित इति शङ्कायाः किमुत्तरम्?**

उ०—घटादिविभिन्नविषयकप्रत्यक्षम्प्रति प्रतिबन्धकत्वं यद्यप्युभयमते समानम् तत्र प्रकारतामते सामग्र्यामधिकवस्तुप्रवेशगौरवेऽपि नाधिकप्रतिबन्धकतागौरवम्, तथापि संसर्गतामते राजस्वत्वाभाववान् पुरुषः सुन्दरः प्रमेयो वाच्य इत्यादिभिन्नविषयकप्रत्यक्षसहस्रं प्रति राजाभाववत्स्वत्वं प्रमेयं वाच्यमभिधेयमित्यादिप्रत्यक्षसहस्रं प्रति च शाब्दसामग्र्याः प्रतिबन्धकतासहस्रस्य कल्पनीयत्वाद् गौरवं स्पष्टमेवेतिकेचित् ।

**प्र०—अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया तु न त्वन्मतेऽपि निर्वाह इत्ययं ग्रन्थ उपपादनीयः ?**

उ०—ननु घटवद्भूतलमित्यादिप्रत्यक्षसामग्रीसत्त्वे राज्ञः पुरुषः, एतद्वाक्यजन्यशाब्दबोधनिर्वाहाय विभिन्नविषयकप्रत्यक्षम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं सर्वैरेव मन्तव्यं किमिति विशेषणसंसर्गतावादिनम्प्रति गौरवोद्भावनमित्यत आह अन्यादृशप्रत्यक्षस्थलीयेति । अयं भावः-विभिन्नविषयकस्य शाब्दबोधस्य च सामग्रीसत्त्वे प्रत्यक्षेच्छादशायां विभिन्नविषयकप्रत्यक्षस्यैवोत्पत्त्या इच्छाया उत्तेजकत्वमावश्यकम्, तच्च यदि सामान्यतः प्रत्यक्षेच्छात्वेन तदा घटप्रत्यक्षं जायतामितीच्छादशायां घटप्रत्यक्षसामग्रीविरहे पटप्रत्यक्षसामग्रीसत्त्वे च पटप्रत्यक्षापत्तिः प्रतिबन्धकीभूतायाः प्रत्यक्षेच्छा-विरहविशिष्टशाब्दसामग्र्या असत्त्वात् । अतस्तत्तत्प्रत्यक्षविशेषमुपादाय तत्तत्प्रत्यक्षेतत्तत्प्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्र्याः प्रतिबन्धकत्वं विशिष्यैव वक्तव्यम् । एवञ्च राजस्वत्वाभाववान् पुरुषः सुन्दर इत्याकारकप्रत्यक्षम्प्रति राज्ञः पुरुष एतद्वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयं तत्संसर्गतावादिनामधिकमिति दिक् ।

**प्र०—जानातीत्यादौ आख्यातार्थः कः ? तस्य संसर्गतया प्रकारतया वा भानमङ्गीकृतं भट्टाचार्येण तत्तद्युक्तियुक्तिप्रदर्शनपुरस्सरं वक्तव्यम् ।**

उ०—जानातीत्यादावाख्यातार्थ आश्रयत्वन्न तु संसर्गः, आख्यातस्याऽऽश्रयत्वे स्वारसिकलक्षणास्थले आश्रयत्वप्रकारकशाब्दबोधम्प्रति योग्यता ज्ञानघटितसामग्र्या उभयवादिसिद्धत्वम्, आश्रयता-संसर्गकशाब्दबोधम्प्रति योग्यताज्ञानघटितसामग्र्याः कल्पनं संसर्गतावादिनामधिकमिति तन्मतमुपेक्षितम् ।

स्वारसिकलक्षणास्थलेऽपि आश्रयतासंसर्गकबोधस्यैव स्वीकारे तु ज्ञानाश्रयत्वाभाववान् चैत्रः सुन्दर इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति चैत्रो जानाति इति वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकताकल्पनेन महद्गौरवम्। प्रकारतावादिनान्तु विशेष्यतावच्छेदकप्रकारकनिश्चयविधया ज्ञानाश्रयत्वाभाववांश्चैत्र इति निश्चयस्य शाब्दबोधीयबाधनिश्चयाभावमुद्रया तादृशनिश्चयाभावस्य च युगपदवस्थानासम्भवेन न प्रतिबन्धकताकल्पनमिति दिक्।

**प्र०—न चैकत्वादिवाचकत्वन्तत्, इत्यत्रत्यो मूलमात्रसंदृब्धो विचारः स्ववाक्यैः संक्षेपयितव्यः।**

उ०—एकवचनादानामेकत्वत्वावच्छिन्ने शक्तिः शक्ततावच्छेदकञ्च सुत्वादि न त्वेकवचनत्वादि तस्य दुर्वचत्वात्। तथाहि यद्यैकत्वादिवाचकत्वं तत्त्वं स्वस्य स्वावच्छेदकत्वेनात्माश्रयात् वाचकताया बोधकतारूपत्वेऽतिप्रसक्तिः शक्तिभ्रमेण द्विवचनादीनामप्येकत्वबोधकत्वात् नाप्येकवचनत्वादिर्जातिविशेषः सुत्वेन साङ्कर्यात् एकवचनादिशब्दस्य स्वादौ रूढिं स्वीकृत्य शक्तिसम्बन्धेन एकवचनादिपदवत्त्वं तदित्यपि न, एकवचनादिशक्तेरप्रामाणिकत्वात्. तान्येकवचनेत्यादिसूत्रे पाणिनिसङ्केतग्रहपरतयाऽपि निर्वाहात् अत एव न[illegible]संज्ञा पारिभाषिकीत्युच्यते। अथ पाणिनिसङ्केतसम्बन्धेन एकवचनपदवत्त्वमे[illegible]तु इति चेन्मैवम् तादृशसङ्केतस्य सङ्केतत्वेन संसर्गता चेत् अतिप्रसक्तिः। कस्यचित्पुंस एकवचनपदात् स्वौजसादिर्बोद्धव्य इत्याकारकसङ्केतस्यापि सम्भवात्। पाणिनिसङ्केतत्वेन तथेति चेत् व्याकरणप्रणेतुः पुरुषान्तरस्यापि तादृशसङ्केतसम्भवेन विनिगमनाविरहात्। तस्मादगत्या आनुपूर्वीविशेष एव शक्ततावच्छेदक इति दिक्।

**प्र०—विभक्तेः संख्यावाचकत्वं प्रकृतेर्लाक्षणिकत्वं वेति अनयोः पक्षयोर्लाघव-गौरवप्रकारः कीदृशः ?**

उ०—प्रकृतेः संख्यालाक्षणिकत्वे शक्यलक्ष्ययोः परस्परमन्वयबोधोपगमे क्षतिविरहेऽपि संख्यान्वयबोधे घटपदादिज्ञानजन्योपस्थितित्वेनानन्तहेतुताकल्पनापत्तिः। सामान्यतः पदवृत्तिज्ञानजन्यसंख्योपस्थितित्वेन एककारणताकल्पनन्तु न समीचीनम्, [illegible]संख्योपस्थितौ संख्याया[illegible]वृत्तिकघटादिपदे तत्तद्विभक्त्यन्तत्वज्ञानवतः पुरुषस्य घटादौ संख्या शाब्दबोध-

प्रसङ्गात् । अत एकत्वादिविषयकशाब्दबोधम्प्रति घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेन हेतुतां प्रकल्प्य विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थित्योः परस्परसहकारित्वमवश्याभ्युपेयम् । नच घटादिपदस्य एकत्वादौ लक्षणाग्रहदशायां घटः प्रमेय इति वाक्यादेकत्वं प्रमेयमित्यादि शाब्दबोधस्य सर्वानुभवसिद्धतया एकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुताया अपि सर्वसम्मतत्वमिति वाच्यम् यादृश-यादृश—पदानामेकत्वादिशाब्दधीजनकत्वन्नोभयवादिसिद्धम् तादृशानन्तपदज्ञानजन्यैकत्वाद्युपस्थितीनां संख्याशाब्दबोधहेतुत्वकल्पनापेक्षया अल्पतरस्वादिपदजन्यैकत्वाद्युपस्थितीनां हेतुताकल्पनायामेव लाघवात् ॥ ० ।

**प्र०—विभक्तेः संख्याबोधकत्वे समानविषयकानुमित्यादिकम्प्रति शाब्दसामग्र्याः प्रतिबन्धकता षट्कं प्रकृतेर्विशिष्टलाक्षणिकत्वे च चतुष्कमित्युक्तम्, काऽसौ रीतिर्यया चतुष्कं षट्कञ्च भवति, किञ्चात्र समानविषयकत्वम्, अनुमित्यादिकमित्यत्रादिपदग्राह्यं किम् ?**

उ०—विभक्तेः संख्याबोधकत्वे योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां विशेष्य-विशेषणभावे विनिगमनाविरहेण शाब्दसामग्रीप्रतिबन्धकतायां प्रतिबध्यप्रतिबन्धकभावषट्कम् । तथाहि योग्यताज्ञानविशिष्टघटोपस्थितिविशिष्टैकत्वोपस्थितिरेका, एकत्वोपस्थितिविशिष्टघटोपस्थितिविशिष्टयोग्यताज्ञानं द्वितीया, घटोपस्थितिविशिष्टयोग्यताज्ञानविशिष्टैकत्वोपस्थितिस्तृतीया, घटोपस्थितिविशिष्टैकत्वोपस्थितिविशिष्टयोग्यताज्ञानं चतुर्थी, योग्यताज्ञानविशिष्टैकत्वोपस्थितिविशिष्टघटोपस्थितिः पञ्चमी, एकत्वोपस्थितिविशिष्टयोग्यताज्ञानविशिष्टघटोपस्थितिः षष्ठी सामग्री, मन्मते तत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेरेकत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताशालित्वेन घटनिष्ठविशेष्यतानिरूपितैकत्वनिष्ठप्रकारताशालित्वेन च प्रत्येकं वैशिष्ट्यं निवेश्य पुनस्तादृशरूपद्वयावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यनिवेशे प्रतिबध्यप्रतिबन्धकभावचतुष्टयमात्रम्, तस्मात् प्रकृतीनामेव संख्यावाचकत्वं युक्तम् ।

"स्वसमानविषयकत्वञ्च स्वान्यूनानतिरिक्तविषयकत्वम्, आदिनाऽलौकिकप्रत्यक्षादि:" ।

**प्र०—घटाकाशोभयगतद्वित्वस्य आकाशेऽपि सत्त्वेन तद्-द्वित्वबोधनेच्छयोच्चरितस्याऽऽकाशाविति वाक्यस्य प्रामाण्यं कस्मान्नेति वक्तव्यम् ।**

उ०—घटाकाशगतद्वित्वस्य समवायेन आकाशेऽपि सत्त्वात् आकाशाविति प्रयोगस्य प्रामाण्यवारणाय पर्याप्तिलक्षणो विलक्षणः सम्बन्धः स्वीकार्यः । नच प्रत्येकापर्याप्तस्य समुदायापर्याप्तत्वमिति न्यायात् पर्याप्त्यपि आकाशे द्वित्वमस्त्येवेति वाच्यम्, उद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेरेव संसर्गतोपगमेन घटाकाशगतद्वित्वपर्याप्तौ आकाशत्वव्याप्यताविरहेण आकाशाविति प्रयोगस्य प्रामाण्याप्रसक्तेः । उद्देश्यतावच्छेदकव्याप्तिविशिष्टद्वित्वादिसमवायस्य तथात्वे घटाविति वाक्यस्याप्रामाण्यापत्तिः ।

समवायस्यैकत्वेन घटादिद्वित्वादिसमवायस्य पटादावपि सत्त्वात् उद्देश्यतावच्छेदकव्याप्यं यद् द्वित्वं तत्समवायस्य संसर्गत्वं तु न युक्तम्, लाघवेनोद्देश्यतावच्छेदकद्वित्वादेरेव सम्बन्धतौचित्यात् । न च तथापि पर्याप्तेरप्रसिद्धिः द्वित्वादिस्वरूपस्यैव द्वित्वादिपर्याप्तितयाऽभिमतसिद्धेः । अत एव पर्याप्तिश्च अयमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष इत्युक्तमवच्छेदकत्वनिरुक्तिदीधित इति दिक् ।

**प्र०—द्वित्वादेः स्वव्यापकप्रकृत्यर्थतावच्छेदकवत्त्वस्यैव सम्बन्धत्वे आकाशो न द्वाविति ज्ञानदशायामपि आकाशावित्यतः शाब्दबोधापत्तिं परिहृत्य जलपृथिव्यौ स्नेहगन्धाविभ्यत्र कस्य केन सम्बन्धेन कुत्रान्वय इत्युल्लेखपूर्वकं शाब्दबोधस्वरूपमुद्बोधनीयम् ।**

उ०—स्वव्यापकोद्देश्यतावच्छेदकधर्मवत्त्वस्य द्वित्वादिसम्बन्धत्वे द्वित्वादिपर्याप्त्यनुयोगितावच्छेदकताया उभयादिवृत्तिधर्म एव स्वीकाराद् द्वित्वादिपर्याप्त्यनुयोगितानवच्छेदकाकाशत्वावच्छेदेन द्वित्ववति द्वित्वपर्याप्तिमद्भेदस्य पर्याप्तिसम्बन्धेन द्वित्वादिमद्भेदस्य वा वृत्तौ बाधकाभावेन आकाशो न द्वाविति वाक्यजन्यशाब्दबोधदशायामाकाशाविति वाक्याद् शाब्दबोधापत्तिः । स्वव्यापकाकाशत्ववत्त्वसम्बन्धेन द्वित्वप्रकारकबोधस्य पर्याप्तिसम्बन्धेन द्वित्ववद्भेदप्रकारकबोधाप्रतिबध्यत्वात् स्वव्यापकाकाशवत्त्वसम्बन्धस्य प्रसिद्धत्वात् तादृश-

सम्बन्धेन द्वित्ववद्भेदप्रकारकबोधस्य आकाशो न द्वाविति वाक्यतोऽशक्यत्वात् उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेनैव द्वित्वप्रकारकबोध आकाशावित्यादितोऽभ्युपेयः, तस्य च पर्याप्तिसम्बन्धेनैव द्वित्ववद्भेदप्रकारकबोधप्रतिबध्यत्वात्। आकाशो न द्वाविति बोधदशायां नाकाशावित्यतः शाब्दबोधापत्तिः। घटत्वादेः प्रत्येकं द्वित्वपर्याप्त्यनुयोगितानवच्छेदकत्वेऽपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया घटपटौ न द्वाविति प्रयोगस्य नापत्तिः।

जलपृथिव्योः स्नेहगन्धावित्यत्रौसर्थो द्वित्वं तस्य पर्याप्त्या जले पृथिव्याञ्चान्वयः। तयोश्च ओसर्थाधेयत्वे निरूपितत्वेनान्वयः, एवम् आवर्थो द्वित्वं तस्य पर्याप्त्या स्नेहे गन्धे चान्वयस्तथा च द्वित्वनिष्ठैकप्रकारतानिरूपितजलत्वपृथिवीत्वावच्छिन्नविशेष्यतात्मकप्रकारताद्वयनिरूपिताधेयत्वप्रकारतानिरूपितं यद्धर्मिताच्छेदकद्वित्वनिष्ठैकप्रकारतानिरूपकं स्नेहत्वगन्धत्वावच्छिन्नविशेष्यताद्वयं तद्वानित्यन्वयबोधो न तु जले स्नेहः पृथिव्यां गन्ध इतिसमूहालम्बनबोधस्तथा सति एकवाक्यताभङ्गप्रसङ्गात्।

**प्र०—तिबादेः संख्यानभिधायकत्वे दूषणान्यनूद्य निरसनीयानि ?**

उ०—चैत्रेण दृष्टो घट इत्यादिस्थलानुरोधेन सौरेकत्वबोधकत्वस्यावश्यकत्वात् तत एव घटोऽस्तीत्यादौ संख्याबोधसम्भवात्। आख्यातैकवचनस्य संख्याबोधकत्वन्नाभ्युपेयम्, अनुगतैकवचनत्वेन एकत्वशक्तत्वन्तु न सम्भवति, एकवचनत्वस्य दुर्वचत्वात्। सुबन्तत्वेऽपि वाऽस्तु तेन रूपेण तिङेकवचनस्यापि एकत्वे शक्तिः परन्तु तज्जन्यैकत्वोपस्थितेः शाब्दबोधम्प्रति कारणत्वे मानाभावः। सामान्यत एकवचनज्ञानजन्योपस्थितित्वेन संख्याशाब्दबोधहेतुत्वन्न सम्भवति, एकत्वेऽगृहीतसुपदशक्तिकस्य पुंसः सुपदप्रकृतिघटपदोपस्थाप्यघटे पटपदोत्तरामादिपदोपस्थाप्यैकत्वान्वयबोधप्रसङ्गात्। अतः सुपदत्वप्रकारकज्ञानजन्यसंख्योपस्थितित्वेनैव हेतुत्वं वाच्यम्. एवञ्च तिवादिपदत्वप्रकारकज्ञानजन्योपस्थितित्वेन संख्याशाब्दबोधहेतुत्वन्नाङ्गीकार्यम्। न च तिबादेः संख्यानभिधायकत्वे चैत्रः पचति तण्डुलम्, चैत्रेण पच्यते तण्डुल इत्यादौ कर्तृकर्मवाचकपदात्तृतीया द्वितीययोरापत्तिः—कर्तृकर्मगतसंख्याया अनभिधाने कर्तृकरणयोस्तृतीयेति कर्मणि द्वितीयेतिसूत्राभ्यां तयोरनुशासनात्। तार्किकमते लकारस्य कर्तृकर्मावाचकतया तदनभिधानस्य द्वितीयातृतीयानियामकत्वासम्भवादिति वाच्यम्, कर्तृत्वादिनिष्ठसंख्याया आख्यातसमभिव्याहृत-

कर्तृकर्मवाचकपदत्वम्, तृतीयाद्वितीयेत्यर्थकत्वाम्नोच्यताम् । चैत्रेण पचतीत्यादौ आख्यातार्थाविवक्षायां तृतीयायाः साधुत्वेऽपि परस्मैपदस्यासाधुत्वान्न तादृशप्रयोगः । धात्वर्थविशेष्यस्य प्रत्ययेनाविवक्षायां भावकर्मणोरिति सूत्रेणात्मनेपदनियमात् । आख्यातार्थाविवक्षायां चैत्रेण पचत इत्यादिप्रयोगस्तु न कर्तृत्वतात्पर्यकसार्वधातुयोग एव शबादिविकरणस्य साधुत्वेनाऽऽख्यातार्थाविवक्षायां शबादिविकरणस्यासाधुत्वात् ।

वस्तुतस्तु तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृत्वकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वाबाधात् तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षया द्वितीयातृतीयाविभक्तेः साधुत्वमित्यर्थे तात्पर्यं पर्यवसानीयम् । तस्मात् तिङेकवचनस्य संख्यार्थकत्वाभावेऽपि न क्षतिरिति सङ्क्षेपः ।

**प्र०—द्वित्वावच्छिन्नोद्देश्यकताबुद्धौ उद्देश्यतावच्छेदकव्यापकतानियमतो विधेयसंसर्गे भासत इति व्युत्पत्तिर्निराकरणीया ।**

उ० द्वित्वावच्छिन्नोद्देश्यकताकबुद्धौ उद्देश्यतावच्छेदकव्यापकताया विधेयसंसर्गे भाने अत्र घटौ स्तः इत्यादौ द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्य च तद्देशावृत्तिघटं द्वित्वाधिकरणमादाय तत्तद्विधेयसंसर्गे बाधात् घटद्वयाधिकरणपरस्य 'अत्र घटौ स्तः' इति वाक्यस्याप्रामाण्यापत्तेः तत्ताद् द्वित्वव्यापकताया विधेयसंसर्गे भानन्तु न सम्भवति, तत्तद्द्वित्वत्वेनानुपस्थितेः । न च तत्ताद्द्वित्वव्यापकत्वस्य वधेये संसर्गविधया भाने तत्ताद्द्वित्वत्वेनोपस्थितिर्नापेक्षणीयेति वाच्यम्, प्रकृतसंसर्गेण एकपदार्थविशिष्टापरपदार्थबोधपरत्वरूपतात्पर्यज्ञानस्य प्रकृतवाक्यार्थघटिततया शाब्दबोधात् प्रागसम्भवेन तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततद्विशेष्यताशालिशाब्दबोधपरमिदं वाक्यमित्याकारकतात्पर्यज्ञाने शाब्दबोधात्प्रागवश्यकल्पनीये प्रकारतायां तत्संसर्गावच्छिन्नस्य विशेषणविधया भानेन तात्पर्यज्ञानात्प्राक् संसर्गोपस्थितेरप्यावश्यकत्वात ।

एवञ्चैकघटादिव्यक्तेरेतद्देशवृत्तितायामत्र घटौ स्तः इत्यादिप्रयोगवारणायव्यासज्यवृत्तिधर्मावाच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यव्यासज्यवृत्तिधर्मवत्वं विधेयसंसर्गतया भासत इति व्युत्पत्तिः कल्पनीया । व्याप्यत्वञ्च व्यतिरेकिविधेयस्थले तद्वदन्यावृत्तित्वम् । केवलान्वयिविधेयकस्थले च द्वित्वत्वावच्छिन्नव्यापकत्वमेव विधेयसंसर्गे भासते । व्यासज्यवृत्तिधर्मवत्वञ्च

उद्देश्यतावच्छेदकतावत्सम्बन्धेन वाच्यम्। अत एतद्वृत्तिघटपटादिनिष्ठ-द्वित्वमादाय अत्र घटौ स्त इति प्रयोगस्य न प्रामाण्यमिति दिक्।

इति प्रथमा

**प्र०—धात्वर्थविषये विवदमानयोः प्राचीननवीनयोर्मतं सङ्क्षेपेण पृथगुपपाद्य फलावच्छिन्नव्यापारे फलव्यापारयोर्वा खण्डशः शक्तिः स्वीकरणीयेति विवेचनीयम् ?**

उ०—प्राचीनमते धातोर्व्यापारमात्रमर्थः फलञ्च द्वितीयार्थः फलविशेषान्वयबोधे च धातुविशेषजन्योपस्थितिः कारणम्। इत्थञ्च ग्रामं त्यजतीत्यादौ धात्वर्थव्यापारे ग्रामनिष्ठविभागजनकत्वमेव, ग्रामं गच्छतीत्यादौ च ग्राम-निष्ठसंयोगजनकत्वमेव, बुध्यते, अत एव ग्रामं गच्छतीतिवत् ग्रामं स्पन्दते इति न प्रयोगः। एतन्मते सकर्मकत्वञ्च फलान्वितव्यापारबोधकधातुत्वम्। एवञ्च फलं द्वितीयार्थ एव, जन्यजनकभावश्च संसर्गमर्यादया भासत इति। नव्यमते च फलविशेषावच्छिन्नव्यापारोपागम्यर्थः फलान्वयिनि वृत्तिश्च द्वितीयार्थः।

अथ गम्धात्वर्थतावच्छेदकफले स्पन्दभेदबोधवारणाय फलविशेष्यकशाब्द-बोधे फलविशेष्यकवृत्तिज्ञानजन्यफलोपस्थितित्वेन कारणत्वात् ग्रामं गच्छतीत्यादौ धात्वर्थतावच्छेदकफले कथं ग्रामवृत्तित्वान्वय इति चेन्न, एकपदाधीनतद्विशेष्यकशाब्दबोधे पदान्तरवृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचारवारणाय तद्वि-विशेष्यकवृत्तिज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरजायमानशाब्दबोधम्प्रति तद्वि-शेष्यवृत्तिज्ञानजन्यतदुपस्थितेः कारणत्वेन ग्रामं गच्छतीत्यादौ फलविशेष्यक-शाब्दबोधस्य कार्यतावच्छेदकानाक्रान्तत्वात्, अत्रोच्यते-द्रव्यं गच्छति नाभा-वमित्यादौ नव्यमते समवायसम्बन्धावच्छिन्नाधेयतैव द्वितीयार्थः, अन्यथा कालिकसम्बन्धावच्छिन्नवृत्तितामादाय ग्रामं गच्छतीत्यत्र कालं गच्छतीत्यपि प्रयोगः स्यात्, एवञ्चाभावनिरूपिततादृशाधेयत्वाप्रसिद्ध्या निरूपितत्वसम्ब-न्धावच्छिन्नप्रतियोगिताकग्रामाद्यभाववत् आधेयत्वत्रोवस्यैव स्वीकरणीतया वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमावश्यकम्। प्राचीनमतेऽपि फलस्य द्वितीयार्थत्वे भूमेर्गमनं न महीरुहस्येत्यादौ महीरुहवृत्तिसंयोगस्य जनकतासम्बन्धावच्छिन्नाभाव एव नञर्थो वाच्य एवं च वृत्त्यनियामकसम्ब-न्धस्याभावप्रतियोगितावच्छेदकत्वमावश्यकम् इत्थञ्च फले स्वतन्त्रशक्त्यकल्पनेन

शाब्दसामग्रीप्रतिबन्धकताया द्वितीयाजन्यफलोपस्थितिधातुजन्यव्यापारोपस्थितीत्युभयोपस्थितिद्वयानिवेशनेन च नव्यमते लाघवम्। किञ्च ग्रामनिरूपितवृत्तित्वाभाववान् संयोगो गुण इत्याकारकविशिष्टवैशिष्ट्यावगाहिसामग्रीदशायां ग्रामं गच्छतीति वाक्यजन्यशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम्, नव्यमते च तदुभयसामग्र्या युगपदवस्थानासम्भवेन न तत्कल्पनमिति महल्लाघवमिति दिक्।

## प्र०—धातोर्व्यापारमात्रवाचित्वे त्यजति गच्छति त्यागो गमनमित्यादिवाक्यादविलक्षणबोधवारणाय किमुक्तं गदाधरेण?

उ०—ननु धातोर्व्यापारमात्रवाचित्वे फलविशेषावच्छिन्नव्यापारे लक्षणां स्वीकृत्य त्यजति गच्छतीत्यादौ अविलक्षणबोधवारणन्तु न युक्तम्, शक्त्याऽविलक्षणबोधप्रसक्तेस्तादवस्थ्यात् गम्यादिशक्तिज्ञानजन्यपदार्थोपस्थितया फलविशेषबोधस्य क्वाप्यभावात्. शाब्दबोधसामग्र्यां फलविशेषबोधकारणन्निवेश्यापि न विलक्षणबोधजनकता, त्यजिगम्योः स्पन्दत्यादिना सह पर्यायतां विपर्यस्यत; पुंसो गमनादिपदात् स्पन्दादिपदजन्यबोधसमानाकारकबोधस्य सर्वानुभवसिद्धतया गम्यादिपदात् फलाविषयकबोधस्यापि प्रसिद्धेरिति चेन्न, कर्मप्रत्ययासमभिव्याहृतत्यागादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यकल्पनात्। एवञ्च त्यजति गच्छतीत्यादौ नाविलक्षणबोधजनकता अनादितात्पर्यस्यैव स्वासिकप्रयोगनियामकत्वादिति दिक्।

## प्र०—गां दोग्धि पयः, दुह्यते गौः क्षीरम्, पौरवं गां याचते विप्र इत्यादौ शाब्दबोधप्रकारः कीदृशः?

उ०—विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुह्यर्थः विभागान्वयिनी आधेयता गोपदोत्तरद्वितीयार्थस्तथा च गोनिष्ठविभागावच्छिन्न-पयोनिष्ठक्षरणानुकूलव्यापारनुकूलकृतिमान् देवदत्त इत्यन्वयबोधः।

दुह्यते गौः क्षीरमित्यत्र विभागक्षरणव्यापारेषु धातोः शक्तित्रयम्, आश्रयत्वमाख्यातार्थः तथा च व्यापारजन्यक्षीरनिष्ठक्षरणजन्यविभागाश्रयो गौरितिवाक्यार्थबोधः।

पौरवं गां याचते विप्र इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः, विषयत्वं गोपदोत्तरद्वितीयार्थस्तस्य दानेऽन्वयः, आधेयता पौरवपदोत्तरद्वितीयार्थ

आश्रयत्वमाख्यातार्थस्तस्यापि दानेऽन्वयस्तथा च गोनिष्ठविषयतानिरूपकपौरववृत्तिरुद्देश्यकदानेच्छाश्रयो विप्र इति शाब्दबोधः ।

**प्र०—शिष्यं धर्मं ब्रूते गगनं दिदृक्षते इत्यादौ प्रकृतिप्रत्ययार्थप्रदर्शनपूर्वकं शाब्दाकारः प्रदर्श्यताम् ।**

उ० शिष्यं धर्मं ब्रूत इत्यत्र ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दो ब्रूञर्थः, ज्ञाने शिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयस्तथा च शिष्यवृत्तिज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयकशब्दानुकूलकृतिमानिति वाक्यार्थबोधः शब्दस्य च विषयताव्यापारानुबन्धिनी ।

यत्तु ज्ञानानुकूलशब्दप्रयोगो ब्रूञर्थः, ज्ञाने धर्मविषयकत्वस्य शिष्यप्रवृत्तित्वस्य चान्वयस्तन्न, यत्र चैत्रज्ञानेच्छया ब्रूते दैववशान्मैत्रस्यापि ज्ञानं जातं मैत्रं ब्रूते इति प्रयोगापत्तेः ।

गगनं दिदृक्षत इत्यत्र विषयित्वप्रकारता द्वितीयार्थस्तस्य चेच्छायामन्वयस्तथा च गगनविषयकत्वप्रकारकदर्शनेच्छाश्रय इति बोध ।

**प्र०—शिष्यं धर्मं निरूपयति, याप्यते ग्राममजा, यजमानं मन्त्रं पाठयतीत्यादौ शाब्दबोधाकारः प्रदर्श्यताम् !**

उ०—शिष्यं धर्मं निरूपयतीत्यत्र ज्ञानानुकूलशब्दो धात्वर्थः, तथा च शिष्यवृत्तिधर्मविषयकज्ञानानुकूलकृतिमानित्यन्वयबोधः ।

यत्तु धात्वर्थो ज्ञानम्, णिजर्थो व्यापार इति तन्न, धातोश्चुरादिघटकतया स्वार्थ एव णिज्विधानात् ।

उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारो धात्वर्थोऽतस्तत्र संयोगावच्छिन्नक्रिया धातुलभ्या, संयोगे ग्रामवृत्तित्वस्यान्वयः कर्माख्यासमभिव्याहारनियन्त्रितव्युत्पत्तिबलाच्च तादृशक्रियान्वितकर्तृत्वं तृतीयार्थचैत्रादिकर्तृत्वविशिष्टव्यापाररूपणिजर्थेन निर्वाह्यत्वसम्बन्धेन विशेषिनम्, अजादिकर्मात्मककर्तृविशेषणीभूताख्यातार्थाश्रयत्वे विशेषणम्, तथा च अजा ग्रामं याप्यते चैत्रेणेत्यादौ चैत्रकर्तृकव्यापारनिर्वाह्य तदाश्रयोऽजा, इत्यन्वयबोधः ।

यजमानं मन्त्रं पाठयतीत्यत्र णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकयजमानपदोत्तरद्वितीयायाः कर्तृत्वमर्थः, कण्ठताल्वाद्यभिघातरूपपाठनिरूपितञ्च

तत्, अनुकूलकृतिमत्त्वम्, तथा च यजमाननिष्ठकर्तृत्वनिरूपकमन्त्रानुकूलकण्ठ-ताल्वाद्यभिघातानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोधः ।

**प्र०—अजां ग्रामं यापयति, अजा ग्रामं नीयते, शिष्यं शास्त्रं ज्ञापयतीत्यादौ प्रकृतिप्रत्ययार्थप्रदर्शनपुरस्सरं शाब्द-बोधाकारः प्रदर्श्यताम् ?**

उ०—अजां ग्रामं यापयतीत्यत्र णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाजाप-दोत्तरद्वितीयायाः कर्तृत्वमर्थः, स तन्निरूपितं कर्तृत्वमाश्रयत्वरूपम्, तथा च अजानिष्ठकर्तृत्वनिरूपकग्रामवृत्युत्तरदेशसंयोगानुकूलव्यापारानुकूलकृतिमानित्य-न्वयबोधः ?

अजा ग्रामं नीयत इत्यत्रोत्तरदेशसंयोगानुकूलक्रिया कर्माख्यातार्थस्तत्रो-त्तरदेशसंयोगानुकूलक्रियानुकूलव्यापाररूपधात्वर्थस्य जन्यतासम्बन्धेन तस्य चाश्रयता सम्बन्धेनाजायामन्वयः ग्रामवृत्तित्वस्य संयोगेऽन्वयः, एवञ्च चैत्र-कृतिजन्यो यः संयोगानुकूलक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूल-क्रियावत्यजेत्याकारकः शाब्दबोधः । फलव्यापारयोः पृथक् शक्तिमते चाश्रय-त्वमाख्यातार्थः, संयोगावच्छिन्नक्रियारूपधात्वर्थे व्यापाररूपधात्वर्थस्य जन्यत-याऽन्वयस्तस्य चाजायाम् । तथा च चैत्रीयकृतिजन्यव्यापार-जन्यग्रामवृत्तिसंयो-गानुकूलक्रियावत्यजेत्याकारकः शाब्दबोधः ।

शिष्यं शास्त्रं ज्ञापयतीत्यत्र शिष्यपदोत्तरद्वितीयायाः कर्तृत्वमर्थः, शास्त्रपदोत्तरद्वितीया विषयत्वमर्थस्तथा च शिष्यनिष्ठकर्तृत्वनिरूपकशास्त्र-विषयकज्ञानानुकूलव्यापारवानित्यन्वयबोधः ।

**प्र०—गुरुं धर्मं पृच्छति, याचमानः शिवं सुरान् इत्यत्र कीदृशः शाब्दबोधः ?**

उ०—गुरुं धर्मं पृच्छतीत्यादौ जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छ-तेरर्थः, ज्ञाने गुरुवृत्तित्वस्यान्वयः शब्दे च धर्मविषयकत्वस्यान्वयः शब्दस्य च विषयताव्यापारानुबन्धिनी तथाच गुरुवृत्तिजिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीन-धर्मविषयक-शब्दानुकूलकृतिमानित्यन्वयबोधः । यत्तु जिज्ञासाबोधकव्यापारः पृच्छतेरर्थः, बोधे गुरुवृत्तित्वस्य जिज्ञासायां धर्मविषयकत्वस्यान्वयस्तथा च

गुरुवृत्तिर्यो धर्मविषयकजिज्ञासाबोधस्तदनुकूलव्यापारानुकूलकृतिमानित्यन्वयबोध इति तन्न, यत्र जिज्ञासाविषयकचैत्रज्ञानेच्छया प्रश्नः परन्तु सामग्रीबलेन तादृशवाक्यात् मैत्रस्यापि जिज्ञासाज्ञानं जातं तत्र मैत्रं पृच्छतीति प्रयोगापत्तेः साक्षाद्धा वर्थतावच्छेदकज्ञानात्मकफलाश्रयतया गुरोरेव प्रधानकर्मतया पृच्छ्यते गुरुर्धर्ममिति प्रयोगानुपपत्तेश्च, 'अप्रधाने दुहादीनामि' त्यनुशासनविरोधादिति दिक् ।

याचमानः शिवं सुरानित्यादौ व्यापारजन्यत्वप्रकारकेच्छा याचत्यर्थः, तत्र शिवान्वितद्वितीयार्थविषयिताया अन्वयो व्यापारो च सुरान्वितवृत्तित्वस्यान्वयः,एवञ्च सुरवृतिव्यापारजन्यत्वप्रकारकशिवविषयकेच्छाश्रय इति बोधः ।

**प्र०—ग्रामं गच्छतीतिवत् स्वं गच्छतीतिप्रयोगन्निरस्य, उह्यते भारो ग्रामं चैत्रेण, घटं जानातीत्यत्र प्रकृतिप्रत्यार्थप्रदर्शनपुरस्सरं शाब्दबोधाकारः प्रदर्श्यताम् ?**

उ०—स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थस्तस्य च धात्वर्थेऽन्वयस्तथा च स्वनिष्ठसंयोगजनकक्रियायां स्वभिन्नसमवेतत्वविरहात् न तादृशप्रयोगः । वस्तुतः भेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थस्तस्य क्रियायामन्वयो भेदे च प्रकृत्यर्थस्याऽऽश्रयतासम्बन्धेनान्वयस्तथा च स्वनिष्ठभेदप्रतियोगितावच्छेदककत्वस्य क्रियायां बाधान्नापत्तिरिति दिक् ।

उह्यते भारो ग्रामं चैत्रेणेत्यादौ उत्तरदेशसंयोगावच्छिन्नक्रियाकर्माख्यातार्थस्तत्रोतरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारस्य धात्वर्थस्य जन्यतया, तस्यचाश्रतया भारेऽन्वयः, ग्रामवृत्तित्वस्य धात्वर्थतावच्छेदकतावच्छेदकतया भासमाने संयोगेऽन्वयस्तथा च चैत्रकृतिजन्यो यः संयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवान् भार इत्यन्वयबोधः, फलव्यापारयोः पृथक् शक्तिमते आश्रयत्वमाख्यानार्थो व्यापाररूपधात्वर्थस्य चाश्रयत्वेऽन्वयः, संयोगे ग्रामवृत्तित्वान्वयः तथा च चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियाश्रयतावान् भार इत्यन्वयबोधः ।

घटं जानातीत्यत्र प्राचीनमते निरूपकतासम्बन्धेन धात्वर्थान्वयि विषयत्वम्, द्वितीयार्थस्तथा च घटनिष्ठविषयतानिरूपकज्ञानवान् इत्यन्वयबोध, वृत्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वमते घटं जानाति पट-

न्नेत्यादौ निरूपकतासम्बन्धावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्धया विषयित्वं द्वितीयार्थ इति नवीना वदन्ति। तन्मते घटनिरूपितविषयितावज्ज्ञानमित्यन्वयबोधः।

**प्र०—विहगो विहगं गच्छतीति प्रयोगापत्तिर्वारणीया ?**

उ०—विहगनिष्ठभूमिसंयोगजनकतत्क्रियाया विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वमादाय विहगो विहगं गच्छतीतिवारणाय विहगवृत्तित्वविशिष्टसंयोगस्य क्रियां स्वजनकत्वस्वाश्रयनिष्ठप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनान्वयः। तथा च विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वे तद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वविरहान्नापत्तिरिति दिक्।

**प्र०—पुष्पं जिघ्रति आघ्रातवान् गन्धवहं सुगन्धमित्यनयोर्धात्वर्थद्वितीयार्थवर्णनपुरस्सरं वाक्यार्थबोधौ प्रदर्शनीयौ ?**

उ०—पुष्पं जिघ्रतीत्यादौ नन्वलौकिकप्रत्यक्षं घ्राधात्वर्थः, आधेयत्वं द्वितीयार्थस्तस्य धात्वर्थैकदेशे गन्धेऽन्वयस्तथा च पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावान् इत्याकारकः शाब्दबोधः। वस्तुतस्तु समवायावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतैव द्वितीयार्थस्तस्याश्च गन्धनिष्ठलौकिकविषयताशालिप्रत्यक्षात्मकधात्वर्थैकदेशविषयतायां निरूपितत्वसम्बन्धेनान्वयस्तथा च पुष्पनिष्ठसमवायावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितगन्धनिष्ठलौकिकविषयशालिप्रत्यक्षाश्रय इति बोधः।

आघ्रातवान् गन्धवहं सुगन्धमित्यादौ च गन्धे गन्धवहवृत्तित्वाभावेऽपि उपाधिनिष्ठगन्धग्रहतात्पर्येण तत्र घ्राततोः प्रयोगात् आनने गन्ध इत्याकारकज्ञानीयगन्धविषयतायामाननादिप्रकारतानिरूपितत्वस्य सत्वात् आनननिष्ठसमवायसम्बन्धावच्छिन्नप्रकारतानिरूपितगन्धनिष्ठलौकिकविषयताशालिप्रत्यक्षवान् इति आघ्रातवान् गन्धवहं सुगन्धमित्यत्र शाब्दबोधः।

**प्र०—अन्ध आकाशं न पश्यतीत्यत्र कीदृशः शाब्दबोधः ?**

प्र०—दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयितार्थकत्वे आकाशनिरूपितलौकिकविषयिताया एवाऽप्रसिद्धचया अन्ध आकाशं न पश्यतीत्यादौ तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरन्यवाक्यार्थस्याऽप्रसिद्धिः लौकिकविषयितायां निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकान्यशाभावबोधस्तु वृत्यनियामकसम्बन्धस्यसंसर्गाभावप्रतियोगितावच्छेदकतया न सम्भवति, वृत्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि आकाशं पश्यति मैत्र इति

भ्रमदशायामाकाशं न पश्यति चैत्र इति वाक्याच्छाब्दबोधस्यानुभवसिद्धतया लौकिकविषयितात्वसामानाधिकरण्येनैव तादृशाभावबोधस्य शरणीकरणीतया आकाशं पश्यं त चैत्र इति वाक्यजन्यबोधदशायाकाशं न पश्यति चैत्र इति वाक्यालौकिक वषयितात्वसामानाधिकरण्येन आकाशाभावविषयकशाब्दबोध पत्तिः । चैत्रीयचाक्षुषादिनिष्ठलौकिकपियतात्वावच्छेदेन तादृशाभावबोधस्तु न सम्भवति. तादृशविषयितात्वेन विषयिताया अनुपस्थितेः ।

नञर्थस्य द्विधा भानोपगमेन आकाशनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववानन्व इत्यपि शाब्दबोधो न युज्यते—चैत्रो घटं न पश्यति मैत्र आकाशन्न पश्यतीत्यादि वाक्यादविलक्षणबोधस्य सर्वानुभवसिद्धस्यापलापापत्तेः । अपि च चैत्रो यदा घटादिकं न पश्यति किन्तु पटादिकमेव तदा घटानिरूपितलौकिकविषयताशालिचाक्षुषत्वाभावस्य बाधेन चैत्रो घटन्न पश्यतीति प्रयोगानुपपत्तिः ।

यत्तु अन्ध आकाशं न पश्यतीत्यादौ धातोरलौकिकविषयिताशून्यचाक्षुषत्वावच्छिन्ने लक्षणा, द्वितीयार्थो विषयितासामान्यं लक्षणया च निरूपकत्वमपि तदर्थं, आश्रयत्वं द्वित्वं निरूपकत्वञ्चाख्यातार्थः, निष्ठत्वसम्बन्धेनाश्रयत्वेऽन्धस्य तस्यनिरूपकत्वे विशेषणतयाऽन्वयः । अन्धनिष्ठाश्रयतानिपकत्वाऽऽकाशादिविषयकत्वपोश्च द्वित्वेऽन्वयः, तस्या स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थाभावेऽन्वयस्तस्य निरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः । तथाच अलौकिकविषयताशून्यचाक्षुषत्वावच्छेदेनान्धादिवृतित्वाऽऽकाशविषयकत्वोभयाभाव इत्याकारकधात्वर्थमुख्यविशेष्यको बोधः, अथवा धात्वर्थस्य व्यापकतासम्बन्धेन तादृशोभयाभावे तस्य चाख्यातार्थनिरूपकत्वे तस्य च प्रथमान्तपदर्थेऽन्धादावन्वय एवञ्च शाब्दबोधस्य प्रथमान्तपदार्थमुख्यविशेष्यकत्वनियमस्यापि न हानिरिति तन्न, तादृशधात्वर्थस्य कालिकादिसम्बन्धेन पटादिवृत्तितया पटो घटं न पश्यतीत्यादिप्रयोगानुपपतेः । तादृशधात्वर्थे कालिकादिसम्बन्धेन घटादिवृत्तित्वनिश्चयदशायां घट आकाशन्न पश्यतीति वाक्याच्छाब्दबोधाभावापतेश्च, वृतितायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशेऽभाव आकाशं न पश्यतीत्यादौ वाक्यार्थाप्रसिद्धिः, तस्मादगत्या अन्ध आकाशं न पश्यतीत्यादिवाक्यानामप्रामाण्यमेवोरीकर्तव्यमिति सङ्क्षेपः ।

**प्र०—वह्नौ घृतं जुहोतीत्यत्र कथन्न वह्नेः कर्मता ?**

उ०—आश्रयतासम्बन्धावच्छिन्नादिवर्थतावच्छेदकफलाश्रयस्यैव कर्मत्वात् अग्नि-

संयोगावच्छिन्नक्रियानुकूलव्यापाररूपधात्वर्थं घटसंयोगनिष्ठाया अवच्छेदकताया आश्रयेणाग्निनावच्छिन्नात्वान्नसंयोगात्मकफलाश्रयत्वमादाग्नेः कर्मत्वापत्तिः। वस्तुतस्तुव्युत्पन्नानां तादृशप्रयोगस्याप्रमाणिकत्वेमेव उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधासम्भवात् संस्कृते वह्नौ जुहोतीत्यादौ च विधेयांशेऽधिकावगाहित्वान्न शाब्दबोधानुपपत्तिरिति शम्।

इति द्वितीयाप्रथमखण्डम्।

**प्र०—अनुमित्यर्थकधातुयोगे द्वितीयार्थः कः? रङ्गं रजतं जानातीत्यत्र कीदृशो वाक्यार्थबोध इति द्वितीयार्थन्तदन्वयप्रदर्शनपुरस्सरमुक्त्वा 'इमे रङ्गरजते' इति समूहालम्बनज्ञानतात्पर्येण रङ्गं रजतं जानातीति कस्मान्न प्रयुज्यते तदुच्यताम्!**

उ०—अनुमित्यर्थकधातुयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थस्तस्य तृतीयान्तोपस्थाप्यासाध्यविधेयकत्वविशिष्टेऽन्वयस्तथा च वह्निमत्वेन पर्वतमनुमिनोमीत्यादौपर्वतनिष्ठोद्देश्यतानिरूपकवह्निविधेयकानुमितिमानिति—बोधः केवलं पर्वतमनुमिनोमीति च न प्रयोगः। अनुमितौ तृतीयान्तोपस्थाप्यासाध्यकत्ववैशिष्ट्यविरहादिति।

रङ्गं रजतं जानीतीत्यादौ तादात्म्यसम्बन्धावच्छिन्नप्रकारताद्वितीयार्थस्तस्याश्च तादृशप्रकारवाचिपदसमानविभक्तिकपदप्रयोज्यविशेष्यताविशेष्यताविशिष्टायां ज्ञानरूपक्रियायामन्वयस्तथा च रजतनिष्ठातादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपकरङ्गनिष्ठविशेष्यताकत्वविशिष्टज्ञानास्य इति शाब्दबोधः।

रङ्गाभेदविषयतानिरूपितविषयत्वावच्छिन्नरङ्गादेर्ज्ञानान्वयिविषयितानिरूपकत्वभासते, "इमे रङ्गरजते, इति समूलाम्बनस्थले च रजताभेदविषयकतानिरूपितविषयत्वानवच्छिन्नस्यैव विषयितानिरूपकत्वम् अत 'इमे रङ्गरजते' इति समूहालम्बनदशायां रङ्गं रजतं जानीतीति न प्रयोग इति यज्ञपतिमतानुयायिनः।

**प्र०—पाकीयतीति प्रयोगस्य युक्तायुक्तत्वचिन्ता विधीयताम्?**

उ०—आत्मनः पाकमिच्छति पाकीयतीत्यादौ पाकादेः सकर्मकतया तण्डुलं पाकीयतीत्यादिप्रयोगापत्तिरस्तु न, इष्यतुमा नाम्युक्तेति यजन्तादेः

भ्रमदशायामाकाशं न पश्यति चैत्र इति वाक्याच्छाब्दबोधस्यानुभवसिद्धतया लौकिकविषयितात्वसामानाधिकरण्येनैव तादृशाभावबोधस्य शरणीकरणीतया आकाशं पश्यं त चैत्र इति वाक्यजन्यबोधदशायाकाशं न पश्यति चैत्र इति वाक्याल्लौकिक वषयितात्वसामानाधिकरण्येन आकाशाभावविषयकशाब्दबोध पत्तिः । चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयतात्वावच्छेदेन तादृशाभावबोधस्तु न सम्भवति, तादृशविषयितात्वेन विषयिताया अनुपस्थितेः ।

नञर्थस्य द्विधा भानोपगमेन आकाशनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववानन्ध इत्यपि शाब्दबोधो न युज्यते—चैत्रो घटं न पश्यति मैत्र आकाशन्न पश्यतीत्यादि वाक्यादविलक्षणबोधस्य सर्वानुभवसिद्धस्यापलापापत्तेः । अपि च चैत्रो यदा घटादिकं न पश्यति किन्तु पटादिकमेव तदा घटानिरूपितलौकिकविषयताशालिचाक्षुषत्वाभावस्य बाधेन चैत्रो घटन्न पश्यतीति प्रयोगानुपपत्तिः ।

यत्तु अन्ध आकाशं न पश्यतीत्यादौ धातोरलौकिकविषयिताशून्यचाक्षुषत्वावच्छिन्ने लक्षणा, द्वितीयार्थो विषयितासामान्यं लक्षणया च निरूपकत्वमपि तदर्थं, आश्रयत्वं द्वित्वं निरूपकत्वञ्चाख्यातार्थः, निष्ठत्वसम्बन्धेनानाश्रयत्वेऽन्धस्य तस्यनिरूपकत्वे विशेषणतयाऽन्वयः । अन्धनिष्ठाश्रयतानिरूपकत्वाऽऽकाशादिविषयकत्वयोश्च द्वित्वेऽन्वयः, तस्या स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थाभावेऽन्वयास्तस्य निरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः । तथा च अलौकिकविषयताशून्यचाक्षुषत्वावच्छेदेनान्धादिवृत्तित्वाऽऽकाशविषयकत्वोभयाभाव इत्याकारकधात्वर्थमुख्यविशेष्यको बोधः, अथवा धात्वर्थस्य व्यापकतासम्बन्धेन तादृशोभयाभावे तस्य चाख्यातार्थनिरूपकत्वे तस्य च प्रथमान्तपदार्थेऽन्धादावन्वय एवञ्च शाब्दबोधस्य प्रथमान्तपदार्थमुख्यविशेष्यकत्वनियमस्यापि न हानिरिति तन्न, तादृशधात्वर्थस्य कालिकादिसम्बन्धेन पटादिवृत्तितया पटो घटं न पश्यतीत्यादिप्रयोगानुपपत्तेः । तादृशधात्वर्थे कालिकादिसम्बन्धेन घटादिवृत्तित्वनिश्चयदशायां घट आकाशन्न पश्यतीति वाक्याच्छाब्दबोधाभावापत्तेश्च, वृत्तितायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशेऽभाव आकाशं न पश्यतीत्यादौ वाक्यार्थाप्रसिद्धिः, तस्मादगत्या अन्ध आकाशं न पश्यतीत्यादिवाक्यानामप्रामाण्यमेवोरीकर्तव्यमिति सङ्क्षेपः ।

## प्र०—वह्नौ घृतं जुहोतीत्यत्र कथम्न वह्नेः कर्मता ?

उ०—आश्रयाणवच्छिन्नतादर्थ तावच्छेदकफलाश्रयस्यैव कर्मत्वात् अग्नि-

संयोगावच्छिन्नक्रियानुकूलव्यापाररूपघात्वर्थं घटसंयोगनिष्ठाया अवच्छेदकताया आश्रयेणाग्निनावच्छिन्नात्वात्संयोगात्मकफलाश्रयत्वमादाग्नेः कर्मत्वापत्तिः। वस्तुतस्तुव्युत्पन्नानां तादृशप्रयोगस्याप्रमाणिकत्वेमेव उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधासम्भवात् संस्कृते वह्नौ जुहोतीत्यादौ च विधेयांशेऽधिकावगाहित्वान्न शाब्दबोधानुपपत्तिरिति शम्।

इति द्वितीयाप्रथमखण्डम्।

**प्र०—अनुमित्यर्थकधातुयोगे द्वितीयार्थः कः ? रङ्गं रजतं जानातीत्यत्र कीदृशो वाक्यार्थबोध इति द्वितीयार्थन्तदन्वयप्रदर्शनपुरस्सरमुक्त्वा 'इमे रङ्गरजते' इति समूहालम्बनज्ञानतात्पर्येण रङ्गं रजतं जानातीति कस्मान्न प्रयुज्यते तदुच्यताम् !**

उ०—अनुमित्यर्थकधातुयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थस्तस्य तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वविशिष्टेऽन्वयस्तथा च वह्निमत्वेन पर्वतमनुमिनोमीत्यादौपर्वतनिष्ठोद्देश्यतानिरूपकवह्निविधेयकानुमितिमानिति—बोधः केवलं पर्वतमनुमिनोमीति च न प्रयोगः। अनुमितौ तृतीयान्तोपस्थाप्यसाध्यकत्ववैशिष्ट्यविरहादिति।

रङ्ग रजतं जानीतीत्यादौ तादात्म्यसम्बन्धावच्छिन्नप्रकारताद्वितीयार्थस्तस्याश्च तादृशप्रकारवाचिपदसमानविभक्तिकपदप्रयोज्यविशेष्यताविशेष्यताविशिष्टायां ज्ञानरूपक्रियायामन्वयस्तथा च रजतनिष्ठातादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपकरङ्गनिष्ठविशेष्यताकत्वविशिष्टज्ञानास्य इति शाब्दबोधः।

रङ्गाभेदविषयतानिरूपितविषयत्वावच्छिन्नरङ्गादेर्ज्ञानान्वयिविषयितानिरूपकत्वभासते, "इमे रङ्गरजते, इति समूलाम्बनस्थले च रजताभेदविषयकतानिरूपितविषयत्वानवच्छिन्नस्यीव विषयितानिरूपकत्वम् अत 'इमे रङ्गरजते' इति समूहालम्बनदशायां रङ्गं रजतं जानीतीति न प्रयोग इति यज्ञपतिमतानुयायिनः।

**प्र०—पाकीयतीति प्रयोगस्य युक्तायुक्तत्वचिन्ता विधीयताम् ?**

उ०—आत्मनः पाकमिच्छति पाकीयतीत्यादौ पाकादेः सकर्मकतया तण्डुलं पाकीयतीत्यादिप्रयोगापत्तिस्तु न, क्यधातुसमानार्थकयतेरिव क्यजन्तादेः

सन्नन्तससानार्थकत्वेपि कर्मतावोधकमुप् साकांक्षात्वानभ्युपगमात्, पाकेति-कृदन्तकर्मत्वविवक्षायान्तु षष्ठ्या बाधेन द्वितीयाया अप्राप्तेश्च न च कर्तृकर्मणोः कृतीत्यस्य द्वितीयाबाधकत्वे कंसवधमाचष्टे कंसं घातयतीत्यत्र द्वितीयानुपपत्तिरिति वाच्यम्, आख्यानात् कृतस्तदाचष्टेकृल्लुक् प्रकृतिपत्ययापत्तिः प्रकृतिवच्च कारकमिति वार्तिकेन द्वितीयाक्षमर्थनात, न च षष्ठ्या द्वितीयाबाधकत्वे तण्डुलस्य पाकीयतीति प्रयोगापत्तिरिति वाच्यम इष्टापत्तेः।

वस्तुतः सम्बन्धसान्यविवक्षायामपि तादृशप्रयोग इष्यत एव, प्रतियोगिपदादन्यद्यदन्यत् कारकादपीति व्युत्पत्तिविरोधस्तु नोद्भाव्यः, तस्या अभेदान्वयस्थल एवाङ्गीकारादिति दिक्।

**प्र०—'अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्' अत्र चिकुरतात्पर्येण बहुवचनान्ततापत्तिर्निरस्यताम् ?**

उ०—'अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्' इत्यत्रायशोद्वयमेव वास्तवम् चिकुरभागद्वयञ्च तत्र राज्ञ आरोप्यत्वेन कविनोत्प्रेक्षितम्, एवञ्च प्रकृते आरोपविशेष्यस्यायशोद्वयस्यैवाख्यातार्थविशेष्यत्वान्वयविशेष्यता तत्पदसमानवचनत्वमेवाख्यातस्येति नानुपपत्तिरिति दिक्।

**प्र०—पाकं चिकीर्षतीत्यत्र प्रकृतिप्रत्ययार्थप्रदर्शनपुरस्सरं शाब्दबोधाकारः प्रदर्श्यताम् ?**

उ०-पाकं चिकीर्षत्यादौ कृतिप्रकारकेच्छाचिकीर्षापदार्थः, विशेष्यत्वं द्वितीयार्थस्तथा च कृतिप्रकारकपाकविशेष्यकेच्छावानितिबोधः, अथवा सनो धात्वर्थविशेष्यकेच्छावाचित्वात् कृतिविशेष्यकेच्छासन्नन्तार्थः सनो धात्वर्थप्रकारकेच्छावाचित्वे ओदनभोजनेच्छादशायामोदनं बुभुक्षते इति प्रयोगो न स्यात्, भोजनं भवत्वितीच्छादशायां बुभुक्षते इति प्रयोगस्य सर्वसिद्धत्वात् शक्तिद्वयन्तु न युक्तं गौरवात्, भोजनप्रकारकौदनविशेष्यकेच्छादशायां बुभुक्षत इति प्रयोगसत्वे नूद्देश्यताख्यविषयताया धात्वर्थे भानेन तस्य निर्वाहः। न च धात्वर्थविशेष्यकेच्छायाः सनर्थत्वे पाकविषयकेच्छा स्यात् कर्माख्यातेन कृतिकर्मत्व-

बोधासम्भव: प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादिति वाच्यम्, कर्तृप्रत्ययस्थले सनर्थेच्छाया धात्वर्थविशेष्यतया प्रतीतावपि कर्मप्रत्ययस्थले तस्या धात्वर्थविशेषणतया प्रतीत्यङ्गीकारेण तादृशकृत्यादिकर्मताया आख्यातेन बोधनसम्भवात् ।

**प्र०—प्रकृति-विकृतिभावस्थले कर्माख्यातेन प्रकृतेरेव कर्मत्वबोधने विकारवाचकपदात् प्रथमाया अनुपपत्तिमाशङ्क्य किं समाहितम् ! लकारेण चोभयकर्मत्वाभिधाने काऽनुपपत्तिः प्रदर्शिता ?**

उ०—काष्ठं भस्म क्रियत इत्यादौ भस्मादिनिर्वर्त्यकर्मताया लकारेणानुक्तत्वेऽपि तत्कर्मताया धात्वर्थे संसर्गविधया भानस्वीकारेण तदुत्तरं प्रथमायाः साधुता, द्वितीयायाः साधुत्वञ्च यत्र प्रातिपदिकार्थविशेष्यतया कर्मत्वं विवक्षितन्तत्रैव यथा भूतले न घटः, इत्यादौ घटादिसम्बन्धस्याभावे संसर्गविधया भानात् प्रथमैव न तु षष्ठी, न च कर्मतासम्बन्धेन नामार्थस्य साक्षाद्धात्वर्थेऽन्वयोऽव्युत्पन्न इति वाच्यम्, घटो नीलो भवत्यादौ भवनादिक्रियायां नीलादेः कर्तृतासम्बन्धेन साक्षादन्वयेन व्यभिचारात् न चैवमपि प्रातिपदिकार्थविशेष्यतया कर्मत्वविवक्षायां काष्ठं भस्मराशिं क्रियत इति प्रयोगापत्तिरिति वाच्यम्, कर्मत्वान्तरविशेषणतानापन्नक्रियायामेव द्वितीयया कर्मत्वं बोध्यते इति कल्पनात् ।

उक्तस्थले लकारेणोभयकर्मत्वाभिधाने विकृतेराख्यातार्थविशेष्यत्वेऽपि आख्यातस्य न तत्समानवचनत्वं प्रकृति-विकृतिसमभिव्याहृतलकारस्य विकारसंख्याभावबोधकत्वाभावव्युत्पत्तेरिति कश्चित्तन्न चारु उभयकर्मत्वाभिधाने विशेष्यभेदेन वाक्यभेदप्रसंगात्. इष्टापत्तिस्तु न एकवाक्यार्थपरस्य काष्ठं क्रियते भस्म इति प्रयोगस्यापत्तेरिति दिक् ।

**प्र०—कर्म कतिविधम्, किञ्च तत्स्वरूपम्, कानि च तदुदाहरणानि विशदं प्रतिपाद्यान्येतानि ?**

उ०—कर्म त्रिविधम् प्राप्यप्रकृतिविकृतिभेदात् तत्र प्राप्यं क्रियाजन्य-

फलशालिक्रियाविषयश्च, यथा गम्यादेर्ग्रामादिर्ज्ञानादेर्विषयश्च प्रकृतिरूपं कर्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तत्, यथा पाकादेस्तण्डुलादिकृतेश्च पुष्पकाशादिः तत्र प्रथमे तण्डुलादिरूपधर्मनाशादेव पूर्वभावविशिष्टस्य तस्याऽसत्त्वम्, काशादौ च काशादिसत्त्वेऽपि कटसन्दर्भादिविरहरूपपूर्वभावासत्त्वाद्विशिष्टस्यासत्वं निर्वहति, इति तृतीयश्च क्रियानिष्पाद्यं यत्तद्रूपम्, यथा पाकादेरोदनादिकृतेर्माल्यादि, तत्र प्रथमे तण्डुलादिरूपपूर्वद्रव्यं विनाश्य ओदनादेर्निष्पादनम्, माल्यादौ च पुष्पादिरूपद्रव्यमविनाश्यैव सन्दर्भविशेषसम्पादनद्वारा माल्यादेर्निष्पादनमिति दिक्।

**प्र०—आकाशविषयकालौकिकप्रत्यक्षदशायामाकाशं पश्यतीति प्रयोगः कथं वारणीयः ?**

उ०—दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयितार्थकत्वेन आकाशनिरूपितलौकिकविषयिताया अप्रसिद्ध्या नाकाशविषयकलौकिकप्रत्यक्षदशायामाशं पश्यतीतिप्रयोगापत्तिः।

**प्र०—अत्यन्तसंयोगं द्वितीयानिमित्तभूतं निरुच्य मासमधीते इति वाक्यजन्यो बोधः प्रदर्शनीयः ?**

उ०—अत्यन्तसंयोगोऽभिव्याप्तिर्यावदवयवसम्बन्ध इति यावत् मासमधीत इत्यादौ च यत्समुदायो मासादिपदार्थस्त एव तदवयवाः, मासादिपदार्थश्च त्रिशद्दिनसम्बन्धः स च दिनपर्याप्तत्रिंशत्त्वव्यापकत्वम् तत्र मासादिपदप्रवृत्तिनिमित्तस्य तादृशत्रिंशत्त्वादेर्मासादिपदादेव लाभे व्यापकत्वमात्रद्वितीयार्थः, सामान्यस्य तस्य दुर्वचत्वात् खण्डशोऽभावप्रतियोगितावच्छेदकत्वमभावश्च द्वितीयार्थ, प्रथमाभाव मासादेराधेयतासम्बन्धेनान्वयस्तादृशप्रतियोगितावच्छेदकत्वत्वावच्छिन्नस्य च प्रतियोगितासम्बन्धेन द्वितीया भावेऽन्वयस्तस्य चान्वयितावच्छेदकचैत्रकर्तृकाध्ययनत्वरूपत्वाश्रयत्वसम्बन्धेनाऽध्ययनेऽध्ययनेऽन्वयस्तथा च मासवृत्त्यभावप्रतियोगितावच्छेदकत्वाभाववत् चैत्रकर्तृकाध्ययनत्ववदध्ययनानुकूलकृतिमान् इति मासमधीते इति वाक्याज्जायते बोधः, व्यापकता—

घटकप्रथमाभावे च प्रतियोगिवैयधिकरण्यमुपादेयम् तेन त्रिंशद्दिनघटकदण्डाद्यवच्छेदेनाध्ययनाभावेऽपि उक्तप्रयोगनिर्वाहः ।

अथवा मासमधीते चैत्र इत्यत्र द्वितीयार्थोऽधिकरणता यथा च मासनिःष्ठाधिकरणतानिरूपकाध्ययनकर्त्तेति शाब्दबोधः तत्राधिकरणतायां धर्मिविशेषणतापन्नस्यमासपदार्थतार्थतावच्छेदकदिनपर्याप्तत्रिंशत्त्वादेश्चैत्रकर्तृकाध्ययनाधारतात्वव्याप्यताद्दशाधारतावृत्त्यन्यतमत्वावच्छिन्नस्वरूपसम्बन्धात्मकावच्छेद्यतासंसर्गेणान्वयः, तेन न्यूनकालाध्ययनस्थले न साद्दशः प्रयोगः, अतिप्रसक्ततया मासत्वस्योक्तरूपावच्छिन्नाधारतानवच्छेदकत्वादिति दिक् ।

**प्र०—'आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत् पर्वतराजपुत्रीमि'ति वाक्याधीनशाब्दाकारो यावत्पदार्थोपवर्णनपुरस्सरं प्रदर्शनीयम् !**

उ०—'आरभ्य तस्यां दशमीं तु यावदि'त्यादौ प्रागभावो यावत्पदार्थः प्रतियोगित्वमनुयोगित्वं वा द्वितीयार्थः, तत्र दशम्या अन्वयस्तस्य च स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासम्बन्धेन पूजारूपक्रियायामन्वयः, व्यापकत्वञ्च स्वाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य भेदरूपम्, अत्र च स्वाधिकरणत्वं स्वावच्छिन्नकृष्णनवमीप्रागभावाधिकरणत्वसम्बन्धेन स्वावच्छिन्नभेदविशिष्टकालिकविशेषणतयाग्राह्यम् तथा च स्वप्रतियोग्यवृत्तित्वविविष्टव्यापकतासम्बन्धेन दशमीप्रतियोगिकप्रागभावविशिष्टपर्वतराजपुत्रीकर्मकपूजनं मदिष्टसाधनम् मत्कृतिसाध्यम् बलवदनिष्टाननुबन्धि चेति शाब्दबोध इति दिक् ।

इति द्वितीया ।

वाराणसेय-श्रीरानीचन्द्रावतीश्यामामहाविद्यालय-श्रीमदुदासीनसंस्कृतविद्यालयद्वयप्रधानाध्यापक-श्रीमदुग्रानन्दझा-विरचिता व्युत्पत्तिवादतरणिः

समाप्ता

———